सरस्वतीभवन-ग्रन्थमाला
( १११ )

# गोरक्षसंहिता

[ भूतिप्रकरणम् ]




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

सरस्वतीभवन-ग्रन्थमाला
( १११ )

# गोरक्षसंहिता

[ द्वितीयखण्डम् ]



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ
( Vol. 110 )

General Editor
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi




# GORAKṢASAṂHITĀ

[ Part II ]

Edited by
**JANĀRDANA PĀṆDEYA**

Sarasvatī Bhavana Pustakalaya
Sampurnanand Sanskrit Vishvavidyalaya

VARANASI
1977

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available at-
Publication Section
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002. ( U. P. )



First Edition : 500 Copies
Price Rs. 34·00

Printed by—
Ghanashyam Upadhyay,
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi.

सरस्वतीभवन-ग्रन्थमाला
( ११० )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




# गोरक्षसंहिता

[ द्वितीयो भागः ]

सम्पादकः
श्रीजनार्दनपाण्डेयः
सरस्वतीभवनपुस्तकालयस्थः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्
२०३३ तमे वैक्रमाब्दे | १८९८ तमे शकाब्दे | १९७७ तमे खैस्ताब्दे

प्रकाशकः —
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी ।

प्राप्तिस्थानम्—
प्रकाशनविभागः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः,
वाराणसी-२२१००२ ( उ० प्र० )



प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम् : ३४ = ०० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# प्रास्ताविकम्

गोरक्षसंहितायां कादिप्रकरणात्मकस्तन्त्रविद्याग्रन्थः प्रकाशितोऽस्माद् विश्वविद्यालयाद् भवद्भिर्दृष्टः। इदानीं द्वितीयभागात्मकमिदं तस्या भूतिप्रकरणं रसायनविद्यासम्बद्धं जिज्ञासूनां विदुषां च पाणिपल्लवयोरुपायनीक्रियते। हठयोगादिभिः प्रसिद्धः सिद्धो गोरक्षनाथो लोके परां प्रसिद्धिमापेति नास्त्यविदितं सर्वेषाम्। तत्र मुखे गुटिकादिस्थापनेन गगनसंचरणम्, चरणाभ्यां भूचरणवज्जलसंतरणादिकम्, अमरत्वम् इत्यादिभिश्चमत्कारैरद्यापि स्मरन्ति जना गोरक्षनाथम्। एकतः खेचर्यादिमुद्राकलनेन सुधापानादमरत्वसाधनमाविष्कृतं गोरक्षनाथेन, अपरतश्च रसायनसेवनेन दारिद्र्यमृत्युविनाशनमाविर्भावितम् इति लोके बहूनां शताब्दानामनन्तरमपि तस्य सादरं स्मरणं नास्वाभाविकम्।

यद्यपि रसायनविद्यायाः प्रादुर्भावो भारते ब्राह्मणकालत एव सञ्जातः, तथापि तस्या व्यवस्थितं स्वरूपं ग्रन्थरूपेण नागार्जुनसमयादेव दृश्यते। रसतन्त्रग्रन्थकर्तृषु भैरवनित्यनाथ-मन्थानभैरव-काकचण्डीश्वरप्रभृतिषु नागार्जुनोऽन्यतमो मतः। समुपलब्धेषु रसतन्त्रग्रन्थेषु नागार्जुनस्य रसेन्द्रमङ्गलापरपर्यायो रसरत्नाकराख्यो ग्रन्थः प्राचीनतमः। खीस्तीयनवमशताब्दारम्भेऽमोघवर्षराज्यकाल उग्रादित्याचार्यरचितायां कल्याणकारकसंहितायां चतुर्विंशः परिच्छेदो रसरसायनसिद्धयधिकारात्मको वर्तते। यद्यपि नागार्जुनो बौद्धः सिद्धो मन्यते, गोरक्षनाथस्य गुरुर्मत्स्येन्द्रनाथः प्राग् बौद्धः सिद्ध आसीदित्यपि प्रसिद्धिः, तथापि गोरक्षनाथस्य सम्प्रदायपरम्परा सर्वथा पार्थक्यं भजते। कापालिकादीनामनेकेषां भेदानां तत्रैवान्तर्भावो जायते। द्वादशशताब्दभवे रसार्णवतन्त्रे कापालिकानां योगानां नामानि सन्ति।

यद्यपि रसतन्त्रं मुख्यत आयुर्वेदविषयः, तथाप्यस्य पल्लवनयशस्तान्त्रिकाणामेव चरणौ चुम्बति। वाग्भटेन रसरत्नसमुच्चयाख्यो रसायनग्रन्थस्तु त्रयोदशशताब्दे संदृब्धः। हठयोगेन दीर्घजीवनप्राप्त्यभावे रसायनप्रकारः सिद्धैरितः पूर्वमेवाविर्भावितः।

भारतीयजना मरणोत्तरं मुक्तये यागादिषु प्रवर्तन्ते स्म। तान्त्रिकैस्तु पिण्डपातानन्तरं जातस्य मोक्षस्य नैरर्थक्यं समाश्रुतम्। शरीरपातोत्तरं गर्दभादीनामपि मोक्षेऽविशेषात् तान्त्रिकैर्जीवन्मुक्तिः प्राधान्यतो मूर्द्धन्यतामानीता। सा च रसायनसेवनादेव सम्भवति स्म। 'जड़ी बूटी अमर जो करै, वैद धनन्तर काहे को मरै' इत्यादिरूपेण प्रसिद्धस्य वचनस्योपदेष्टा गोरक्षनाथः कुतः समाश्रयेद् रसतन्त्रममरत्वसाधकमिति विचिकित्सा जागर्त्येव जिज्ञासूनां चेतसि। कायसिद्धयर्थं गोरक्षनाथेन रसायनसमाश्रयो हितकरः प्रतिपादितो गोरक्षवाण्यामित्थं समासाद्यते ( सबदी ६२,२१० )—

**निहचल घरि बैसिवा पवन निरोधिबा कद न होइगा रोगी।**
**बरस दिन में तीनि बार काया पलटिवा नाग बंग बनासपती जोगी॥**

**त्रिया न स्वांति बैद न रोगी रसायणी अर जाचि षाय।**
**बूढ़ा न जोगी सूरा न पीठि पाछे घाव यतनां न मानै श्रीगोरषनाथ** ।। इति।

एवं तावद् रसतन्त्रं गोरक्षनाथस्यानभिमतं नासीत्। कायपरिवर्तनार्थं दारिद्र्यनाशनार्थं च तेन नूनं भूतितन्त्रमुपदिष्टं स्यात् पूर्ववर्तिभ्यस्तन्त्रेभ्यो विशिष्टम्। प्रसिद्धास्वष्टसिद्धिषु भूतिसिद्धिः सामान्या सर्वनियन्तृत्वरूपैश्वर्यात्मिका। अत्र गोरक्षसंहिताया भूतिप्रकरणं रसायनतन्त्रं रसविज्ञानत्वेन (१,१६), रसतन्त्रत्वेन (१,११२; ११६; ११६), रसचक्रत्वेन (१,११८), रसोपनिषत्त्वेन (१.११५), भूतितन्त्रत्वेन (२,१०१; ३,१), भूतिशास्त्रत्वेन (४,३) च स्मृतम्। इह रसायनशास्त्रविध्यननुसारी प्रयोगो निन्दितः—न शास्त्ररहितं किञ्चित् कर्म चास्तीति कुत्रचित् (४,१३९;१४२), कर्तव्यं तु विधानेन शास्त्रोक्तं भूतिसाधने (३,६७), लोकोपहास्यतां याति व्यसनेनाभिभूयते, अत एव विधानेन शास्त्रोक्तं कारयेद् विधिम् (२,१०५), शास्त्रोक्तं च विधिं ज्ञात्वा (५,७३), शास्त्रोक्तविधानेन (६,४८४), शास्त्रार्थात् कर्मनिपुणो रसकर्मारभेत् तु तत् (४,११७) इति। इत्थं गोरक्षसिद्धान्तसंग्रहसिद्धान्तादिह प्रतीपता लक्ष्यते।

पारदबन्धनं यत्नसाध्यम्। रसेन्द्रबन्धनायैव मुख्यतो रसशास्त्रप्रवृत्तिरभ्युपेया। अत एवानेन कर्मणा सम्पूर्णयज्ञपुण्यावाप्तिर्मता—एकतः सर्वयज्ञास्तु एकतः सूतकः कृतः (१,८५), न तत् पुण्यं भवेदेव अश्वमेधशतैरपि (१,८८) इति। पारदः सर्वरत्नप्रधानः स्वीकृतः—सर्वरत्नप्रधानस्तु पवित्रः पुण्यदायकः (१,३०) इति। सर्वपापक्षयङ्करः (१,८२), स सर्वभूतमयः (१,३२), अक्षयरसधेनुः (५,२५७;५८;७; १६८), आत्मवदजरोऽमरश्च (१,३६-३६), साक्षाच्छिवः (१,२८;२९;६०;२,१;५,१७५), शिववद् व्यापकश्च (१,५५) प्रतिज्ञायते।

पारदेन स्वर्णनिर्माणप्रक्रिया सर्वत्रेह वर्णिता दृश्यते—वेधयेत् सर्वलोहानि हेमतां नयति क्षणात् (५,२५०), जाम्बूनदं भवेद् दिव्यं द्वेधा त्रेधा तु वेधितम् (६,३४), वेधेन जायते हेम (६, १००), उत्तरोत्तरवेधेन हेमकारी इति। पारदनिर्मितेन स्वर्णेन यागे कृते देवास्तृप्तिमवाप्नुवन्ति (१,६६)। पारदनिर्मितस्वर्णाङ्गुलीयकसंवलितहस्तेन कृतं दानमक्षय्यं भवति (१,१००)। पारदो दारिद्र्यनाशनः (१,२१;७,२२२;८,५) इति।

पारदभक्षणेन सुबुद्धिः (८,६०), प्राज्ञता, शूरता, महावाग्मिता च सम्पद्यते (८,६१)। आयुर्वर्द्धकः पारदः—महदायुःप्रदं चैव रसबन्धं वदाम्यहम् (४,३), दीर्घायुष्यप्रदायकः (४,५१) इति। अस्य सेवनेन कल्पान्तस्थायित्वम्, महाकल्पायुष्ट्वम्, अमृतायुष्ट्वं चेह प्रख्यापितम् (५,२५२;३०१;६,६४;१६८;२४८;२६८;२६१;४२७;५७२;६,१३०;७,१४६;८,१०४;१३३)। पारदभक्षणे कृते विषाग्निसलिलाभिचारादिभिर्न हन्यते नरः (५,१८०; २६०)। शापेन हानिश्च न भवति।

यद्यपि रोगविनाशपूर्वकमायुःप्रदं शास्त्रमायुर्वेदः, तथाप्यत्र बहूनां रोगाणां

विनाशोपायो दर्शित ओषधीनां रसायनस्य च सेवनेन—'लेपात् कुष्ठविनाशिनी', 'तत्क्षणाद् व्रणरोहिणी' (७ १३३) इति। रसबन्धप्रसङ्गेऽमृतोपमाः सिद्धिदा महौषधयोऽत्र वर्णिताः (७,१२४)। तासां द्रव्यादीनां च रोगनाशित्वादिका गुणास्तत्र तत्र समुदीरिताः—तद् विषं कुष्ठरोगघ्नं नागमूत्रेण पेषयेत् (७,१८०), क्रौञ्चजस्तु रसो दिव्यः....जराव्याधिनिहन्ताऽसौ (७,२२), नयनाञ्जनेषु तीक्ष्णेन **नयनस्य जलापहः** (७,२२४), **विषूचिकाद्यजीर्णं तु** अन्नोद्भवरसं तथा, हरति तत्क्षणादेव प्राशितः किञ्चिन्मात्रतः (**७,२२५**), **आमवातं** तथा **शूलं शिरोर्तिं** हरते क्षणात् (**७,२२६**); **रक्तस्रुतिं** हरेत् क्षिप्रं, **वातातीसारमेव** च शिरारक्तस्रुतिं चैव धारयेत् तत्क्षणेन तु (७,२२७), **कर्णशूलं** च **पूतित्वं मुखदोषं** हरेत् क्षणात् (७,२२८), **वातगुल्मं** च प्लीहादि द्विभुक्तं च शिरोद्भवम्, लीढ्वाम्लवेतसं हन्ति सप्ताहात् कालयोगतः (७,३१७), नेत्ररोगांश्च सर्वांश्च मांसस्य विकृतीस्तथा, बाधिर्यं पूतिशूलं च कर्णरोगं च पूरणात् (७,३१६), त्र्यूषणेन कलां खादेद् **दीप्ताग्निर्जायते** नरः, खरवत् सतुषं धान्यं भक्षितं जरति क्षणात् (७,३२०) इति। भोजननियम इह ७,३५४ तः ३६७ श्लोकान् यावद् दर्शितः। कुष्ठाद्या आमयाः सर्वे **महाज्वराश्च** त्रिसप्ताहाद् व्रजन्ति (८,१०३), **कुष्ठाद्या** व्याधयः सर्वे हन्यान्मासेन तु ध्रुवम् (८,१३१), महाजराध्वस्तदेहो द्विमासेन युवा भवेत्, **सितकेशः** कृष्णस्निग्धकेशो वलिविवर्जितः (८,१३२;१३७), **सर्वकुष्ठहरो** योगः (८,१३६) सिताः केशाः कपालगा मासद्वयोपयोगेन कृष्णा अलिसमप्रभा भवन्ति (८,१३७) ओषधय इमा बन्ध्यानां पुत्रदाः शस्त्रेभ्यश्च रक्षिकाः ख्याताः (७,१३०) इति। पारदसेवनेन सर्वामयविनिर्मुक्तः (५,१७६), धातुवृद्धियुक्तश्च जायते जनः। **सोमवृद्धिरोगो** मासेन नश्यति (७,१५) इति। नवमशताब्दभव उग्रादित्याचार्यः कल्याणकारके (२४,४७) पारदसेवनेनाक्षय्यसिद्धिं रोगहीनतां देहदार्ढ्यं च प्रख्यापितवान्—

**तं संमूर्च्छितमेव वामृतमलं संभक्ष्य मङ्क्ष्वक्षयम्।**
**वीर्यं रोगविहीनतामतिबलं प्राप्नोति मर्त्यः स्वयम्॥** इति।

द्वादशशताब्दजेन नित्यनाथसिद्धेनापि स्वकीये रसरत्नाकराख्ये रसग्रन्थे रसमहिमेत्थमेव निरूपितः (५,५)—

**अनेनोद्वर्तनं सम्यग् वलीपलितनाशनम्।**
**वत्सराद् दिव्यदेहः स्याज्जीवेद् वर्षसहस्रकम्॥** इति।

अस्मिन् वैज्ञानिके युगे भारतीयचिकित्सापद्धतेः समुन्नयनाय सर्वासामोषधीनां गुणा अवश्यं परीक्षणीयतामर्हन्ति। एतासामोषधीनां सेवनेन वाजीकरणत्वमाख्यातम्—'क्षरेच्च वनिता लेपात् पीताद् ध्वजसमुच्छ्रयम् (७,१३), मुखस्था वारयेच्छुक्रम् (७,१३३) इति। क्रौञ्चजस्य रसस्याशनेन वाजीकरणता संपद्यते (६,१६७;७,२२६;८,६०)।

पारदसेवनेन जरा नाक्राम्यति, आगता च नश्यति (६, ६४; १०१; १९५; २२१;२९०;२६१;४२८;५७१), क्षुत्पिपासे अपि न बाधेते जनम् (६, ४८१)। महाबल-

पराक्रमयुक्तस्य वज्रकायता भवति (५, २६०; ६७; ६, २४६; ६७; ६२; ४७२; ७, १४५; ४६; ८, ६५; ७४)। महौषधीनां भक्षणेन तथा बलवान् भवति मनुष्यो यद् देवा राक्षसा अपि तं प्रणमन्ति (७,१३०)।

पारदभक्षणेन मनुष्यः पद्मगर्भसदृशो भवति (६,२२१), चक्रवर्तित्वं योगेश्वरत्वं चावाप्नोति (१,१०९; ५, ३०२; ६,२६९), दिव्यदेहत्वमाप्नुयात् (५, १७६; २५२; २५४; २६१; ३०१; ६,६४; २४७; २८८; ३३७; ४८२; ५७१; ७,१७; १८; १५२; २४३; ८,६४; १०३; ११८; १३३)। नागार्जुनेनापि रसरत्नाकरे रसभक्षणाद् दिव्यदेहत्वाप्तिरुक्ता—'भक्षणात् साधकेन्द्रस्तु दिव्यदेहमवाप्नुयात्' इति।

रसायनसाहाय्येनेदृशमञ्जनं प्रस्तूयते, यस्याञ्जनेन मानवः सर्वदिव्यानि पश्यति, तमसि सर्वं जम्बूद्वीपं चराचरं च पश्यति ( ८,१९५;९८ )। सूतसेवनेन मनुष्यः सर्वभूतानामदृश्यो भवति, स्वच्छन्दशिवरूपधृक् सर्वभवनानि विचरेत् (५,१७८;६,४८०)। विशेषतस्तारकान्तमण्यादियोगेन पारदनिर्मितगुटिकाया मुखे धारणाद् मनुष्यो वज्रकायः, ज्ञानयोगसमन्वितो दिव्यदेहोऽमरत्वमाप्नोति द्वितीय इव शङ्करः ( ७,१४४;१५२;२४४ )। मुखे गुटिकाधारणेन खेचरत्वाणिमाद्याश्च योगजा गुणाः प्रादुर्भवन्ति (५,२५३), रसधेनोरस्या गुञ्जामात्रोपयोगेन पलेनैकेन महाबलपराक्रमोऽन्तरिक्षे समुत्पतेत् (७,१६८;१६६;२४३;८,६५)। सिद्धानामुड्डयनादिप्रक्रिया श्रूयते योगबलेन, किन्तु रसादिसेवनेनापि सा सम्पद्यते। लघोर्लघुतरो भूत्वा लघुत्वे व्यवस्थितः पारदसेवी जलस्योपरि गच्छेत्, अणोरणुतरो भवति, गुरोर्गुरुतरश्च (१,४५;४६)। पारदसेविनः सिद्धस्य मूत्रविष्ठाभ्यामपि स्पृष्टो लोहो हेमतामापद्यते (५,२६२)। सप्तदशशताब्दारम्भे रचिते सुवर्णतन्त्राख्ये ग्रन्थेऽप्ययमेव भावो निबद्धोऽस्ति—

**तं सूतं भक्षयेद् यो हि सोऽमरत्वमवाप्नुयात्।**
**तस्य मूत्रपुरीषेषु शुल्वं भवति काञ्चनम्॥** इति।

पारदभक्षणेनाणिमादिसिद्धयो जायन्ते (१,१२३;२,२;५,१७७;१८८), ईशित्ववशित्वसिद्धिनामापि स्मृतम् (१,४६)। इमाः सिद्धयो महौषधीनामपि भक्षणेन लक्ष्यन्ते (७,१२९)।

अमरत्वस्य मृत्युञ्जयताया वा समवाप्तये यतमाना दृश्यन्ते जनाश्चिरकालतः। पारदस्य साहाय्येनेदममरत्वमपि गोरक्षसंहितायां सुलभमाख्यातम् ( ५,१७६;६,१६७;१९५; २४७;२९२;३३७;४७१;४८०;४८१;७,२४४;१४५;१४६;१५२;२२२;२४३;८,४५;९० )।

पारदस्य सेवनेन कार्तिकेयसदृशः सिद्धो भवति जनः (६,२२२)। अब्देनैकेन द्वितीयः शङ्करो भवति (५,१७७;८६;५,११८;५५;७,२४४)। इतोऽप्यग्रे साधको भुक्तिं मुक्तिं च यौगपद्येन समासादयति (१,२८;२६;१०८;२३;४,१५२;१८६;५,१८९;६,५८२;७,३७४; ८,६५)। भुक्तेर्मुक्तेश्च यौगपद्येन समवाप्तिस्तान्त्रिकाणां विशेषः। किन्तु गोरक्षसंहितायामितोऽप्युच्चां मुक्तिमाप्तुं शक्नोति साधकः पारदसेवनात् (६,४८२;८,६५;९३)।

सर्वाणि शास्त्राणि परस्परं सहायकानि भवन्ति। अस्मिन् भूतिशास्त्रे ज्योतिषादि-शास्त्राणि समाश्रितानि। शुभे मुहूर्ते पारदसंग्रह-भक्षणादिविधानमुक्तम्—आदौ संग्राह्य सूतं तु मुहूर्ते शोभने दिने ( ३,७ ), विषुवे खादयेद् योगे ( ६,२६० ), सर्वग्रस्ते दिवाकरे ( ६,४७८ ), सोमे वा पुष्यदिवसे ( ६,४७६ ), अष्टम्यां वा चतुर्दश्यां ग्रहीतव्याः (७,११९), खादयेद् विषुवे योगे ( ७,१२८ ), कृतमाङ्गलघोषेण शङ्खतूर्यरवे कृते, पुण्याहे विषुवे योगे खादेदुक्तप्रमाणतः (८,१०५), इति। प्रायशः पारदग्रन्थेषु मुहूर्ताधारेण कार्यारम्भः प्रशस्तो मतः। जैनपरम्परायामपि कल्याणकारकमहासंहितायाम् (२४,१०) इयमेव प्रवृत्तिर्लक्ष्यते।

इह ग्रन्थे शिव-गुरु-भैरव-गणनाथ-दिगीश्वर-वह्नि-लोकाधिप-कन्यका-ब्राह्मणादीनां पूजनोत्तरं पारदसंग्रहभक्षणादिकार्यं प्रशस्तं सिद्ध्यै कल्पते—शिवं संपूज्य विधिवत् पूजयित्वा तु दैशिकम् (३,७), भैरवं योगिनीचक्रं गणनाथं दिगीश्वरान्, वह्निं लोकाधिपान् क्षेत्रं गुरुं ब्राह्मणकन्यकाः ( ३,८ ), गन्धमाल्यैश्च पूजयेत् ( ८,८५ ), पूजयित्वाऽघोरास्त्रं षोडशाङ्गविधानतः ( ८,१०१ ), पूजनाल्लाभदायकम् ( ८,११३ ), इत्यादि। दीनानाम् अनाथजनानां चापि संतर्पणं बलिदानक्रियाभोज्यैरावश्यकमुक्तम् (४,६)। तान्त्रिकाणां रससम्बन्धिग्रन्थेष्वियं सपर्यासरणिर्दृश्यते। रससम्बन्धिजैनग्रन्थेष्वपीयं दृग्गोचरायते (द्र० कल्याणकारके २४,११-१२)।

यद्यपि सिद्धानां भक्तिं प्रत्यौदासीन्यं प्रख्याप्यते, तथाप्यस्मिन् भूतितन्त्रे द्वित्रस्थानेषु भक्तिपूर्वकं जपमुद्रादिविधानोपदेशः कृतोऽस्ति—ज्वालिनीं तु महामुद्रां बद्ध्वा विज्ञाप्य भक्तितः (५,६२), जप्त्वा भक्त्या समुद्धरेत् (८,१०१) इति। जपादतिरिक्तार्थे मन्त्रशब्दस्येह प्रयोगो बहुत्र लक्ष्यते—भक्षयेत् प्रातरुत्थाय दीप्तबीजेन मन्त्रितम् ( ६,२८७ ), कलामात्रं तु मन्त्रात्मा दीप्तबीजेन मन्त्रितम् ( ६,२९० ), खादेदात्मसमायोगे त्वग्नीषोमीयमन्त्रितम् (६,१९३;७,१२८), शास्त्रोक्तविधानेन कर्तव्यं मन्त्रसाधनम् ( ६,४८४ ), अनित्यं मन्त्रवीर्यं तु मन्त्रयुक्तं नियोजयेत्, विधिं ज्ञात्वा तु मन्त्रितम् (७,३), पूजयित्वा तु मन्त्रिताः (७,११६), दीप्तैः स्वायम्भुवैर्मन्त्रैः शाक्तैर्वा यजनं सदा (७,३६९), नित्यं मन्त्रतनुर्बुधः ( ७,३७० ), वीणुमन्त्रितम् ( ८,९२ ) अघोरमन्त्रणार्थाय यथामन्त्रं तथोपरि ( ५,६६ ) सूतको मन्त्रदीपितः (६,५८२), अग्नीषोमीयबीजेन (७,२४२) इति। अभिमन्त्रणार्थको मन्त्रशब्दस्तत्राधिक्यतः प्रयुक्तः। क्वचिदभिमन्त्रणशब्दोऽपि दृष्टिपथमुपेयते—इष्टमन्त्राभि-मन्त्रितम् (८,८८), इष्टाणुनाभिमन्त्रित्वा पिबेदमृतमुत्तमम् (८,१३०) इति।

पारदमारणभक्षणादेः प्राग् मन्त्रविद्याजपस्य विधानमस्ति—लक्षं पूर्वं जपेद् विद्याम् (६,४७८), तदा जपेद् विश्वरूपाम् ( ६,४७६ ), अघोरास्त्रमघोरं तु जपमानस्तु साधकः (७,१६२), त्रैलोक्यडामरं वाथ कामिकं वा जपेद् बुधः (७,१६३), जप्त्वा घोरं विधानतः ( ८,८८ ), त्रिभिरावरणैर्योगं जप्त्वा ( ८,१०१ ), जप्त्वा धान्ये निधापयेत् (८,२४१), अमृताद्यं जपेद् घोरम् ( ७,१४० ), सहस्रं तु जपेद् घोरम् (७,१४०), नित्यं

सोमोदये जपेत् ( ७,१४२ ) इति । जपान्ते होमोऽपि कर्तव्यो भवति—पूजाजपहोमरतः सदा तिष्ठेच्छिवे रतः ( ७,३६८ ) इति ।

ज्वालिन्यादिमहामुद्राबन्धनोल्लेखेन तान्त्रिकविद्यात्मकत्वमस्य ग्रन्थस्य निश्चीयते—मुद्रां तु ज्वालिनीं बद्ध्वा दिशश्चास्त्रेण तर्जयेत् ( ४,६८ ), ज्वालिनीं तु महामुद्राम् (५,६२), अघोरमन्त्रणार्थाय (५,६३) सिद्धो भव त्वमस्माकं शिववाक्यानुसारतः (५,६४) इति । इह कामिकान्तपदोद्भवा विश्वरूपा विद्या वर्णिता सिद्ध्यर्थम् (६,४७७;७८;७९), सर्वेषां मन्त्रतन्त्राणां क्रम एष उदाहृतः ( ४,१४२ ) इत्याख्याय ग्रन्थकारोऽस्य तथात्वं स्वत एवोद्घोषयामास ।

रसेन्द्रस्य पारदस्य संग्रहणोत्तरं बन्धकर्मनिर्वर्तनाय रसमण्डपं रसशाला वा आवश्यकी भवति। तस्याः सर्वोपस्करणैर्युक्तत्वं महागजशालोपमत्वं च स्वीक्रियते गोरक्षसंहितायाम् ( ४,११८ ) । तत्र पेषणी ( ४,१२४ ), मृत्तिकापेषणी ( ४,१२५ ), मुशलोलूखलः ( ४,१२५ ), आयसोलूखलिका ( ४,१२५ ), लोहमुष्टिः ( ४,१२६ ), दृढो लोहकटोरकः ( ४,१२६ ), अहिरणी, संदंशः, कर्तरी ( ४,१२७ ), तूलिका धारापात्रम्, ताम्रकांस्यभवानि भाण्डानि (४,१२८), तानि वङ्गनागकृतान्येव ( ४,१२९ ) इत्यादीनामावश्यकानां रसमण्डपोपकरणानां नामानि लभ्यन्ते । रसकर्मसहायकाः कुशला अग्निकर्मविशारदाः, क्लेशायाससहाः शूराः, दयादाक्षिण्यसंयुताः सत्यवाचो धर्मशीला नयानयविशारदाः, क्लेशायाससहाः, शिवभक्ताः, महोत्साहा लोभमोहविवर्जिताश्चापेक्ष्यन्ते स्म, ये प्राणैः कण्ठगतैरपि भेदं नैव प्रकुर्वन्ति स्म ( ४,१२९-३१ ) । अन्येषामपि रसतन्त्रपारगाणां दैशिकानां श्रैष्ठ्यमुक्तम् ( ४,१३२ ) । अस्मिन् प्रसङ्गे केषाञ्चिद् वार्त्तिकानाम् (=धातुविद्याविशारदानाम् ) इह समुल्लेखो वर्तते, ये स्वकीयं स्वकीयं स्वर्णनिर्माणकौशलं सिद्धत्वं च प्रख्याप्य धनिकेभ्यो धनमाहरन्ति स्म । तेषां शास्त्रकर्मोपदेशतः परीक्षा कर्तव्येति गोरक्षसंहितायामुक्तम् ( ४,१३४-३७ ) ।

रसबन्धो सर्वभूतहितार्थाय समुपादिष्टः सूरिभिः, नात्मार्थाय कदाचन । तस्मिन् प्रसङ्गे धातूनां द्रावणमपि सर्वभूतहितार्थमेव कार्यम् ( ४,९९ ) । पारदस्य जारणमारणाद्यष्टादशविधेषु कर्मसूपयोगिनां द्रव्याणां नामानि महते ज्ञानाय सम्पत्स्यन्ते जिज्ञासुसन्दोहस्य । तत्र चन्द्रकान्तमणिः ( २,४८;६४ ). सूर्यकान्तमणिः, आग्नेयो मणिः, (६;५), तारकान्तमणिः (२,४९;६,५) षड् लवणाः, (२,५८), क्षारत्रयम् ( २,६० ), पञ्च विषाणि (२,६०-६१), पञ्चोपविषाणि, पञ्च तैलानि ( २,६५ ), बीज-दाडिम-जम्बीर-नारङ्ग-तिन्तिडी-चणक-वेतसाम्लानि सप्तसंख्याकानि (२,८२-८५), क्वचिच्च पञ्चाम्लानि समुदीरितानि (३,५०) । नौसादरेत्याख्यस्य द्रव्यस्य नाम 'निशारम्' इति स्मृतम् ( २,५१ ) । नरगजोष्ट्रहयखरादिमूत्राणि (३,३३;३८;४२;५,२३९), प्राणिदुग्धानि वसापित्ततैलशुक्रादीनि च बहुत्रोपयोगीनि मतानि रसबन्धनकर्मणि । ग्रन्थेऽस्मिन् स्मृतान्यौषधनामानि त्वधुनातनानां चिकित्सकानामनुसन्धानविषयाणि भवितुमर्हन्ति । तेषां गुणस्वरूपवर्णनम् ( ७,२४-१०२ ), क्षेत्र-

निरूपणं च ( ७,११०-१४ ) कृतम्। किन्तु तान्यौषधानि शिवाराधनतत्पराः साधका एव प्राप्नुवन्तीत्यभिहितम् ( ७,११४ )।

रसशालानिर्माणोत्तरं द्रव्याणां सहयोगेन रसस्य बन्धनाय दोला-कच्छप-पातनाध-ऊर्ध्व-जालक-बकनाल-नलिकादियन्त्राणामुल्लेख इह ग्रन्थे कृतः। वाग्भटकृते रसरत्न-समुच्चये पञ्चविंशतिसंख्यातोऽप्यधिकानां यन्त्राणां वर्णनमस्ति। द्वादशशताब्दजे रसार्णवे बकनालस्य स्थाने वङ्कनाल-शब्दः प्रयुक्तः। इह ग्रन्थे द्वन्द्वमेलापकयोगो वर्णितः (५,१३१—३६)। तदर्थं रसार्णवे तु 'द्वन्द्वमेलापनम्' इति रसरत्नसमुच्चये च 'द्वन्द्वानम्' इति शब्दान्तरम्। इह 'चक्रयोगः' दर्शितः (६,५१४)। तदर्थं रसार्णवे धातुरत्नमालायां तु 'चक्रयन्त्रम्' इति, रसरत्नाकरे च 'चाक्रीयन्त्रम्' इति शब्दान्तरम्। इह गोरक्षसंहितायां महामृतयोगस्य (८, ८७) वर्णनं विद्यते। रसग्रन्थान्तरे तन्न लभ्यते। यद्यपि रसग्रन्थेषु बहवो वज्रादिमूषा वर्णिताः, तथापि गोरक्षसंहितायाः 'अग्निमूषा' (६,५७५) नान्यत्र दृश्यते। 'गर्भमूषा' ( ५,१७२-७३ ) तु रसरत्नाकरे गारमूषात्वेनोल्लिखिता संभाव्यते। गर्भद्रुते-र्विस्तरशो वर्णनम् ( ५, ७६; ९९; २३४—४४; ६, ५७६ ) इह समासाद्यते।

व्याकरणादिशास्त्राणि दर्शनानि शिल्पायुर्वेदरसायनसंगीतज्योतिषादीनि च सर्वाण्येव विज्ञानानि संस्कृतभाषया निबद्धानीति गीर्वाणवाण्या अनितरसाधारणो महिमा। नव-नवोद्भाविताः प्रकारा रसायनस्य रसायनग्रन्थेषु वर्णिता इत्यद्भुता भावाविष्कारशक्तिः संस्कृतभारत्याः। गोरक्षसंहितायास्ततः पूर्ववर्तिनां च केषाञ्चिद् रसायनग्रन्थानां संस्कृतभाषाऽपाणिनीयतां स्पृशति। एतादृशेषु वैज्ञानिकेषु विषयेषु भाषायास्तथात्वं मर्षणीयतामर्हति।

उपसर्गयोगमन्तरैव ल्यबन्तानां प्रयोगाणां बाहुल्यमस्ति—ग्राह्य (५,२३१;२८९), गृह्य (५,२२५;२८६; ६,१८३; ५३७), शोष्य (५,३५; ६२; ६,३७१) भाव्य (६,३५;६१; ११८;३११;६,७१), गाल्य (५,२३६), धाम्य (६,२५८;३८४), वाप्य (६, ५३४; ४४८), वाह्य (६,३०१), सार्य (६,३०४), योज्य (५,३७;६, ४८९;५०४), छाद्य (६,३८२), क्वाथ्य (६,४०५;७,२१६); स्थाप्य (६, २२७;४६८), घृष्य (५, ३५), त्यज्य (७,२०५); पिंष्य ( ८,९५ ), पूज्य ( ८,९८ ) इति। सत्यपि समासे ल्यबभावोदाहरणानि—संस्कृत्वा (५,२२४ ), निर्मलीकृत्वा ( ५,८८ ), संपिष्ट्वा ( ६,४९० ), एकीकृत्वा ( ८,६७ ), आश्रयित्वा ( ८,१०० ) अभिमन्त्रित्वा (८, १३०) इति। छन्दोभङ्गोदाहरणं क्वचित्—चतुःषष्टि स वेधी भवेत् ( ६,३०४ ) इति। गणपददोषास्तु बहुत्र सन्ति—बन्धते रसम् ( ७,२० ), जरेत् तु ( ७,२४७ ), विंधते ( ८,६७ ), 'यदा निग्रहति क्रुद्धः' इति। अथ लिङ्गदोषा दृश्यन्ते—वाष्पसेकानि कारयेत् ( ४,१०५ ), तस्योपयोगं कर्तव्यम् (८,३८), तदा वापं तु कर्तव्यम् ( ४,१०६ ), कार्यं रसबन्धं तु सूरिभिः ( ४,९९ ), कार्यं यागं भूतहितैषिभिः ( ४,०० ) इति। लिप्तव्यम् ( ४,७९ ), द्वित्रिर्वाराणि ( ४,१०१ ) इत्येतादृशा अन्येऽपि सन्तो व्याकरणदोषा नास्य रसायनग्रन्थस्य दोषाय कल्पन्ते।

मृत्तैलस्य कृतेऽत्र तुरकस्नेहशब्दप्रयोगः—तुरकस्नेहभावितम् ( ६,२५६ ) इति। एरण्डतैलस्य पर्यायत्वेनेह रबूकस्नेहः (४,५३), रुबूकस्नेहः (७,२५३), इति च प्रयोगः। सुमेरुदेशे रुबु (Rubu) आहोस्विद् रुबुयक (Rubuyak) शब्द एरण्डवाचकः, बाहुल्येन समेधनं रुबुशब्दस्यार्थस्तत्र देशे, एरण्डस्य पर्यायो 'वर्धमानः' इत्यपि वर्तते आयुर्वेदे, यस्य प्रवृत्तिः 'रुबु'-शब्दार्थेन संवदतीति केचिदातिष्ठन्ते। तन्न विचारसहम्, उरुबुशब्दस्य प्रयोगः सुश्रुते (२,२२२,२) दृश्यते। रक्तैरण्डार्थको रुबुशब्दः शार्ङ्गधरसंहितायां प्रयुक्तः।

त्रयोदशशताब्दादारभ्य देशान्तरीयाः शब्दा रसायनग्रन्थेषु बाहुल्येन ग्रहीतुमारब्धाः। नित्यनाथसिद्धकृते रसरत्नाकरे बालुकामीनस्य स्थाने 'समक उलसेदा रेगमाही' इति यावनचिकित्सकेषु प्रसिद्धो यावनभाषाप्रयोग ऊरीकृतः। गोविन्दाचार्यविभाविते रससारे तु संस्कृततेरा देशभाषाप्रचलिता हत्थोडी (२२,१५-२०) रेतनी, छिन्नी, अहिंणी, मणः, घणी, देगयन्त्रम् (२२,१५-२०), लद्दिः ( >लीद) (८,४) इत्यादयः शब्दा गृहीताः। वाग्भटकृते रसरत्नसमुच्चये (३,१५५) 'मुरदासंग' इत्यर्थे 'मृद्दारश्रृङ्ग'-शब्दः प्रयुक्तः। यशोधरप्रणीते रसप्रकाशसुधाकरे (६ ८५) तु स बोदारश्रृङ्ग' इति शब्देन स्मृतः।

गोरक्षसंहितायां तु 'अहिंणी'-शब्दस्थाने 'अहिरणी' (४,१२७) इति प्रयुक्तः शब्दो हिन्दीभाषायाः 'अहरन'-शब्दस्य सामीप्यमावहति। एवमेव 'खानपान' शब्दो गोरक्षसंहिताया भूतिप्रकरणे प्रयुक्तस्तस्या अत्यर्वाचीनत्वं साधयति—'खाने पाने नियोजयेत्' (४,७७) इति। दत्तात्रेयतन्त्रेऽपि तदभिन्नैव प्रवृत्तिः—'खाने पाने प्रदातव्यम्' (६।१३) इति। इह गोरक्षसंहितायाम् आरोटाखोटशब्दावव्याख्यातौ पारिभाषिकौ सन्तावपि। तयोर्व्याख्या रसरत्नसमुच्चये ( ११,१६;७१ ) लभ्यते। गोरक्षसंहिताया भाषाविषयादिकं समीक्ष्य वक्तुमिदं शक्यते यद् वाग्भटग्रन्थरचनोत्तरमस्याः प्रणयनं संवृत्तम्। इत्थमयं ग्रन्थस्त्रयोदशशताब्दतः पूर्ववर्ती भवितुं नार्हति। सप्तदशशताब्दजौ 'रससंकेतकलिका' 'धातुमञ्जरी' इति ग्रन्थौ। तत्र 'फिटकरीम्', सोरम् ( सोड़ा ), सादरम् ( नौसादर ) इति प्रयुक्ताः शब्दा मौद्गलकालिकाः सन्ति। इत्थम् आभ्यां ग्रन्थाभ्यां परवर्ती भवितुं नार्हति गोरक्षसंहिताग्रन्थः। रसायनविद्याविकासे तान्त्रिकैर्महान् योगः समास्थितः। गोरक्षसंहिताया इदं भूतिप्रकरणं रसतन्त्रश्रृङ्खलायाः पूरकमनुपेक्ष्यं कटकस्वरूपं रसायनविद्याजिज्ञासूनां रसायनविद्याज्ञानसंवर्द्धनाय महते लाभाय कल्पते। पण्डितजनार्दनपाण्डेयः सरस्वतीभवनस्थो ग्रन्थस्यास्य समुद्धाराय सम्पादनाय च भृशं साधुवादमर्हति। सरस्वतीभवनग्रन्थमालाया एकादशोत्तरशतसंख्याकप्रसूनत्वेन प्रास्फुट्यमुपेतोऽयं ग्रन्थो विदुषां मनांसि नूनमामोदयिष्यतीति ध्रुवं प्रत्येति।

महाशिवरात्रौ २०३३ वै०
( १६-२-७७ खीस्ताब्दे )
बुधवासरे

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य
**सम्पूर्णानन्द संस्कृतविश्वविद्यालये**

॥ श्रीः ॥

# उपोद्घातः

हरति सकलरोगान् मूर्च्छितो यो नराणां
वितरति किल बद्धः खेचरत्वं जवेन ।
सकलसुरमुनीन्द्रैर्वन्दितं शम्भुबीजं
स जयति भवसिन्धोः पारदः पारदोऽयम् ॥

अथेदमुपस्थाप्यते विपश्चितां पुरतो गोरक्षसंहिताया द्वितीयं **भूतिप्रकरणम्** । "भूतिर्विभूतिरैश्वर्यं" इति कोशबलाद् भूतिरित्यैश्वर्यपर्यायः, ऐश्वर्यं च नाम ईश्वरभावः, अणिमाद्यष्टगुणसंपन्नदेहवत्त्वमिति यावत् । एतदेव देहसिद्धिरिति कायसिद्धिरिति पदेन वा निगद्यते ।

भारतीयविचारकाणां केषाञ्चिदयमप्येकः पन्था यदनुयायिनो मन्वते-कैवल्यप्राप्तये यज्ज्ञानं मुख्यं साधनं तदनेनैव देहेनोपार्जनीयम्, शत-शतजन्मान्तरीयसुकृतवशादुपलब्धस्यास्य मानवदेहस्य विनाशानन्तरं जन्मान्तरेषु ज्ञानलालसा तु वन्ध्यायाः पुत्रमुखदर्शनलालसेव निष्प्रयोजना । किञ्च विविधामयैरुपक्षीयमाणेन शीतोष्णादिद्वन्द्वमसहमानेन जरामरणजनितक्लेशकर्शितेनानेन प्राकृतदेहेन कोटिसूर्यप्रतीकाशं ब्रह्मतत्त्वं कथं साक्षात्कर्तुं शक्येत, अतो महाज्ञानसंपादनाय प्राकृतमिदं शरीरं दिव्यत्वे परिणमनीयम् । 'देवो भूत्वा देवं यजेत्" इति न्यायेनाणिमाद्यष्टगुणसंपन्नेन जरामरणादिविवर्जितेनैव देहेन कैवल्यं लब्धुं शक्यते । यतो हि भूतधर्मैरनभिभव एव देहसिद्धेः प्रधानं लक्षणम्, तेनैव न व्याधीनां जरादिविकृतीनां च निवृत्तिर्मृत्युञ्जयत्वं च प्राप्यते ।

इदं च देहस्य दिव्यत्वं कथं संभवतीति जिज्ञासायां ते वदन्ति-यथा पित्रोः शुक्रशोणितसंबन्धादिदं प्राकृत वपुर्लभ्यते तथैव जगतः पित्रोर्गौरीहरयो रजोवीर्यरूपाभ्रपारदसंपर्कादस्य वपुषो दिव्यत्वं संपादयितुं शक्यते, इति ।

भगवतः शम्भोर्देहान्निःसृतः सारभूतोऽयं रसशब्देनोच्यते, अत एवायं विचारकसंप्रदायोऽपि रससंप्रदायः, एषां दर्शनं च रसेश्वरदर्शनमित्यभिधीयते । विविधसंस्कारसंस्कृतोऽयं रसो लोहवेधे देहवेधे च समर्थो भवतीति निश्चप्रचम् । यथा संस्कृतेन रसेन लोहवेधं क्रियते लोहं च सुवर्णं भवति तथैव तेन देहवेधे कृते देहोऽप्ययं दिव्यत्वं प्राप्नोति, तदैव चाणिमाद्यष्टसिद्धयो लभ्यन्ते । उक्तञ्च —"एकोऽयं रसराजः शरीरमजरामरं कुरुते" इति ।

देहस्य स्थिरीकरणसामर्थ्यं केवलं पारद एव दृश्यते, नातिरोहितमायुर्विदां यथा सर्वसत्त्वानां लयः परमात्मनि भवति तथैव सर्वद्रव्याणां लयः पारदे भवतीति, तथा हि सर्वाः

काष्ठौषध्यो नागे लीयन्ते, नागो वङ्गे, वङ्गस्ताम्रे, ताम्रं रौप्ये, रौप्यं सुवर्णे, सुवर्णं च पारदे लीयते।

अस्यैव रसस्य विशदं विवेचनं विविधाः प्रयोगा उपयोगाश्चात्र भूतिप्रकरणे भगवता गोरक्षनाथेन प्रोक्ता दृश्यन्ते। इतिहासोऽत्र साक्षी यदस्यां रससाधनायां नाथसम्प्रदायस्य कियान् सहयोग इति, प्रायशो नाथगुरव एव रसशास्त्रप्रवर्त्तका रससिद्धाश्चाभवन्नित्यत्र न कस्यापि विचिकित्सा भवितुं शक्नोति, गोरक्षनाथ-नित्यनाथ-शालिकनाथाद्यसंख्यनामान्येषां गणयितुं शक्यन्ते।

नाथसंप्रदायविषये गोरक्षसिद्धान्तसंग्रहस्य भूमिकायां, गोरक्षनाथविषये गोरक्षसंहिता-विषये चास्या एव गोरक्षसंहितायाः प्रथमस्य कादिप्रकरणस्योपोद्घातेऽस्माकं यद्वक्तव्यं तदुक्तं जिज्ञासुभिरवलोकनीयम्, अत्र तु रसविषय एव किञ्चिन्निवेद्यते—

## निरुक्तिः

यद्यपि साहित्यविद्भी रसपदेन शृङ्गारादयो नव गृह्यन्ते, द्रव्यगुणविद्भिश्च मधुराम्ला-दयः षड्रसाः, पाञ्चभौतिकेऽस्मिन्देहे भुक्ताहारादिपाकपरिणामेनोत्पन्नेषु सप्तधातुष्वप्येको रसपदेनोच्यते, परन्तु "रसो वै सः" इति श्रुतिवाक्ये रसपदेन यद् गृह्यते तत्पारद एव। अयं च पञ्चविधो भवति—"रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा" इति, इयं चैषां नाम्नां निरुक्तिः—

**रसः**—रसनात्सर्वधातूनां रस इत्यभिधीयते। यद्वा—
जरामृत्युविनाशाय रस्यतेऽसौ रसः स्मृतः।
**रसेन्द्रः**—रसानामधिराजत्वात् रसेन्द्र इति कीर्तितः।
**सूतः**—देहलोहमयीं सृष्टिं सूतेऽतः सूत उच्यते।
**पारदः**—रोगपङ्कादिमग्नानां पारदानाच्च पारदः।
**मिश्रकः**—सर्वधातुगतं तेजो मिश्रितं यत्र तिष्ठति।
तस्मात्स मिश्रकः प्रोक्तः.......... ॥

एतत्पञ्चप्रकारकस्यास्य परिचयार्थमिमे श्लोका द्रष्टव्याः—

रसो रक्तो विनिर्मुक्तः सर्वदोषै रसायनः।
संजातास्त्रिदशास्तेन नीरुजा निर्जरामराः ॥१॥
रसेन्द्रो दोषनिर्मुक्तः श्यावो रूक्षोऽतिचञ्चलः।
रसायनोऽभवंस्तेन नागा मृत्युजरोज्झिताः ॥२॥

देवैर्नागैश्च तौ कूपौ पूरितौ मृद्भिरश्मभिः ।
तदा प्रभृति लोकानां तौ जातावतिदुर्लभौ ॥३॥
ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतकः ।
दशाष्टसंस्कृतैः सिद्धो देहं लोहं करोति सः ॥४॥
अथान्यकूपजः सोऽपि चपलः श्वेतवर्णवान् ।
पारदो विविधैर्योगैः सर्वरोगहरः स्मृतः ॥५॥
मयूरचन्द्रिकाच्छायः सरसो मिश्रको मतः ।
सोऽप्यष्टादशसंस्कारैर्युक्तश्चातीव सिद्धिदः ॥६॥

विस्तरस्तु भूतिप्रकरणस्यास्य द्वितीये...... पटले द्रष्टव्यः ।

अस्य च रसस्य वर्णनमस्माभि ऋग्वेदे, अथर्वणि, पुराणेषु, तन्त्रशास्त्रे, योगग्रन्थेषु, आयुर्वेदे च विविधप्रकारेण प्राप्यते ।

## रसोत्पत्तिः

रसस्योत्पत्तिविषये भारतीयपरम्परायां यच्छ्रूयते तदिदम् —

रसेन्द्रस्य समुत्पत्ति लक्षणं च सुरार्चिते ।
सर्वं तत्ते प्रवक्ष्यामि शृणु पार्वति संप्रति ॥१॥
सुरेन्द्रैर्मुनिभिः सर्वैर्गन्धर्वोरगकिन्नरैः ।
प्रार्थितोऽहं भवत्या च कुमारोत्पत्तिहेतवे ॥२॥
तारकासुरनाशाय देवानां रक्षणाय च ।
तदा हिमालयगिरेर्गुहायां सुचिरं प्रिये ॥३॥
संक्रीडमानयोः कालो गतो नौ पुत्रलिप्सया ।
त्रिजगत्क्षोभि सुरतं त्याजितं प्रेरितः सुरैः ॥४॥
कपोतरूपमास्थाय वह्निः प्रागाद् गवाक्षतः ।
तं दृष्ट्वा लज्जया देवि विसृष्टं सुरतं त्वया ॥५॥
निक्षिप्तं वदने वह्नेरावयोर्बीजमुत्तमम् ।
तेनेदं दह्यमानोऽग्निः गङ्गायां तद् व्यमोचयत् ॥६॥
तेन गङ्गापि संतप्ता तद्बहिर्विससर्ज ह ।
तद्द्विधाभूद्बहिर्गत्वा स्कन्दः प्रासूयतैकतः ॥७॥

अन्यः शुद्धरसो जातो न्यपतद्वहु भारते ।
शतयोजननिम्नेषु पञ्चकूपेषु संस्थितः ॥८॥
तन्मताद्धातवो जाता मणयो दिव्यवस्तु च ।
तत्तत्क्षेत्रविशेषेण नामवर्णादिकं शुभम् ॥९॥
प्रायो रसेन्द्रः प्रोक्तोऽयं जन्मदारिद्र्यभञ्जनः । इति ।

( रसोत्पत्तिप्रकरणम् १—१० )

अर्थात् कैलासेवर्तमानयोर्गौरीहरयोः संभोगकाले प्रच्युतं शिववीर्यं कपोतरूपेण वह्निना स्वमुखे गृहीतं तत्तेजोऽसहमानेन च गङ्गायां प्रक्षिप्तं, तत्र तस्य भागद्वयमभवत्, एकेन भागेन कुमारोऽजायत अपरं च गङ्गाजलेन सह प्रवहमानं तटोपवर्तिन्यां भूमौ वर्तमानेषु पंचकूपेषु ( खातेष्विति यावत् ) पतितं तदेव पञ्चाकारेण लभ्यत इति भारतीय रसविदां मतम् । मन्ये पञ्चकूपेषु संचितिरस्य पञ्चविधत्वं सूचयति ।

## रसदोषाः

यथा लवणं शर्करा वा जले विलीय तद्दूषयति न च दृष्टिपथमायाति, तथैव सकलपदार्थानां विलयनसामर्थ्यवति रसेऽपि दोषाणां सद्भावो नाश्चर्यकरः । यश्च रसो मानवं देवं कर्तुं प्रभवति स एव सदोषश्चेत्तदा तद्विनाशेऽपि सामर्थ्यं दधाति । अत्र गोरक्षसंहिताया भूतिप्रकरणे यत्र तत्र दोषाणां परिहारस्य संकेतः कृतः किन्तु स्पष्टतया तेषां परिगणना न दृश्यते । ग्रन्थान्तरेष्वपि नैकमत्यमेतद्विषये । कैश्चित्पञ्च, कैश्चिदष्टौ, कैश्चिच्च दशदोषाः परिगणिताः ।

दोषाणामुत्पत्तिविषये पौराणिकमाख्यानं रसरत्नसमुच्चये रसराजपद्धतौ चैवं दृश्यते यत्—रसप्रभावान्मानवान् देवतुल्यबलान् पश्यता शक्रेण रुद्रः प्रार्थितस्तेन च रसः सदोषः कृतः, यश्च मानवस्तद्दोषनिराकरणे समर्थः स्यात्स एव तत्प्रभावमुपयोक्ष्यति न सर्वे, इति । वस्तुतस्तु भूगर्भान्निःसृतोऽयं रसो यदि ज्वालामुखीविवरोपवर्तिस्थानेषु लभ्यते चेत् प्रायस्तदुष्णतापप्रभावादन्यधातुसंयोगान्मुक्तो भवति, अन्यत्रोपलब्धस्तु तैर्मिश्र एव स्यादतस्तस्य सदोषत्वं स्वाभाविकम् । ते च दोषाः—

१. विषं वह्निर्मलं चेति त्रय इत्येके ।
२ मलं वह्निः भूः उन्मत्तः शैलश्चेति पञ्च इत्यन्ये ।
३. मलविषाग्निगिरिजचपलवङ्गनागेति सप्तेत्यपरे ।
४. 'नागो वङ्गोऽग्निश्चापल्यम् असह्यश्च विषं गिरिः, मलं चाष्टौ"--दोषा इति बहवः ।
५. विषं वह्निर्मलं चेति त्रयो नैसर्गिका दोषाः, ( १ ) भूमिजा, ( २ ) गिरिजा, ( ३ ) जलजा, ( ४–५ ) नागजा ( कपाली-कालिका च ), ( ६–७ ) बंगजा

( श्यामा कापालिका च ) एते सप्तौपाधिकाः, एवं नैसर्गिकौपाधिकत्वेन मिलिता दशदोषा इति केचित् ।

एत एव औपाधिका दोषा सप्तकञ्चुकपदेनाप्यभिधीयन्ते । यद्यपि रसेन्द्रसारसंग्रहकारेण पर्पट्यादिसप्तकञ्चुकाः पृथक्परिगणिताः किन्तु साम्प्रतिकानामेष एव मान्यः सिद्धान्तो यत् नागाद्योऽष्टौ दोषाः स्वाभाविकाः, भूमिजादयः सप्तकञ्चुका औपाधिका इति ।

ते च दोषास्ततो निरसनीयाः । अन्यथा रसः सनागो व्रणम्, सवङ्गः कुष्ठं, समलो जाड्यं, सवह्निर्दाहं, सचाञ्चल्यो वीर्यस्खलनं, सविषो मरणं सगिरिर्मूर्च्छां, सासह्याग्निश्च स्फोटं करोतीति विस्तरेण विवृतं रसग्रन्थेषु । एतद्दोषनिराकरणाय पूर्वं रसस्य संशुद्धिः क्रियते, यतो हि—

> **तस्माद्रसस्य संशुद्धिं विदध्याद्भिषजां वरः ।**
> **शुद्धोऽयममृतं साक्षाद्दोषयुक्तो रसो विषम् ॥**

तच्च शोधनं सामान्यं विशिष्टं चेति यथावश्यकतानुकूलं परीक्ष्य कर्तव्यम् । शोधनविधिश्च रसतन्त्रेषु विलोकनीया, संशुद्ध्यनन्तरमेव रसः संस्करणीयः ।

## रससंस्काराः

संस्कारो हि विशेषगुणान्तराधानम्, सम्यक् शोधितोऽपि रसोऽसंस्कृतश्चेद् भक्षणार्हो न भवति । अतस्तदुपयोगाय तस्य संस्कारा आवश्यकाः । एतत्त्वत्र विशेषेण बोद्धव्यं यत् रससंस्करणात्पूर्वं रसवैद्यः स्वयं संस्कृतो भवेत् । तस्य संस्करणं नाम जातकर्मादिभिः प्रसिद्धैः संस्कारैः संस्कृतस्यापि रसकर्मणि संस्कारवत्त्वम् । तथा च तेन प्रथमं रसविद्याविशारदो गुरुः कर्तव्यस्ततश्च रससंस्कारार्हा रसशाला कथंविधा कार्या ? तत्र पात्राणि यन्त्राणि च कानि कथंप्रकाराण्यपेक्षन्ते ? सहायाः कीदृशाः स्युः ? औषध्यः काः काः कियन्मात्राश्च संग्रहणीयाः ? रसेश्वरीमन्त्रस्याघोरमन्त्रस्य च कियत्साधनं कुत्रापेक्षते ? इत्यादिविषयाणां सम्यक्तया तेनावगतिः कर्तव्यानन्तरं च रससंस्करणे प्रवर्तितव्यम् । इदं तु निश्चप्रचं यद्दैवीमाराधनां विना रसकर्मणि साफल्यकामना दुराशामात्रम् । अतः साधकः पूर्वं रसग्रन्थेषूपदिष्टाना तत्तन्मंत्राणां सविधिसाधनां कृत्वैव रसकर्मणि प्रवृत्तो भवेदिति ।

ते च संस्काराः—स्वेदन-मर्दन-मूर्च्छनोत्थापन-पातन-सेचन-नियमन-दीपनानीत्यष्टौ प्रायः सर्वैरेव स्वीकृताः । किन्तु गोरक्षसंहितायामष्टादशसंस्कारा विहितास्ते चैवम्—

> **स्वेदनं मर्दनं चैव मूर्च्छनोत्थापने तथा ।**
> **पातनं दीपनं चैव निरोधं च नियामकम् ॥**
> **चारणं गर्भसंद्रावं जारणं पातनं पुनः ।**
> **ग्रासप्रमाणं विधिवद्रञ्जनं सारणं तथा ॥**

क्रामणं वेधयोगं च शरीरावापयोगता।
अष्टादशविधं कर्म विज्ञेयं शर्वजस्य तु॥
( गो० सं० भूति प्र० ३।४-६ )

प्राय एत एवान्यैरपि ग्रन्थकृद्भिरनुमोदिताः परन्तु तेषां पूर्वापरभावे क्वचिद् वैमत्यं दृश्यते। रसपद्धतौ, रसरत्नसमुच्चये, धन्वन्तरिसंहितायां, रसराजसुन्दरे च पूर्वोक्तानामष्टानामेव संस्काराणामवश्यकर्तव्यता विहिता, यथाह वाग्भटः—

इत्यष्टौ सूतसंस्काराः कर्तव्याः प्रथमं बुधैः।
ततः प्रयोज्यो यत्नेन रसो निखिलकर्मसु॥ इति॥

तत्र १. स्वेदनम्—क्षाराम्लैरौषधैर्वा दोलायन्त्रे स्थितस्य रसस्य पाचनं स्वेदनमुच्यते, एतेन तद्गतं मलं शिथिलं भवति।

२. मर्दनम्—तत्रोक्तैरोषधैः सर्वाम्लैः काञ्जिकैश्च सह तस्य पेषणं मर्दनमुच्यते, एतेन बहिर्मलनाशो भवति।

३. मूर्च्छनम्—मर्दनसंस्कारोक्तैरौषधैः सह तस्यैकीभावो मूर्च्छनमुच्यते, एतेन तस्य मलदोषो वह्निदोषो विषदोषश्च नाशं प्राप्नोति।

४. उत्थापनम्—मूर्च्छितस्य रसस्य स्वेदनातपादिभिः पुनः स्वस्वरूप आनयनमुत्थापनमभिधीयते, एतेन मूर्च्छावस्थाया व्यापत्तिस्तस्य नश्यति।

५. पातनम्—तत्रतत्रोक्तैरोषधैर्मर्दितस्य यन्त्रस्थितस्य ऊर्ध्वाधस्तिर्यग्वा निःसारणं पातनमुच्यते। एतेन वङ्गादिसंमिश्रणजा दोषा नश्यन्ति।

६. रोधनम्—सैन्धवलवणयुते जले रसस्य दिवसत्रयं स्थितिर्निरोधनमुच्यते, एतेन रसे संमिश्रितानामौषधानां धातूपधातूनां च वीर्यं संग्रहीतं भवति।

७. नियमनम्—पुनः स्वेदनेनास्य नियमनं क्रियते। एतेनास्य चञ्चलत्वं निवर्तते गाढश्च भवति।

८. दीपनम्—खनिजैः पदार्थैः कन्दमूलादिभिश्च सह रसं घटे संस्थाप्य तत्रोक्तानामौषधीनां रसं प्रपूर्य दिवसत्रयं यावत् स्थापनमेव दीपनमित्युच्यते एतेन रसो बुभुक्षितो ग्रासग्रहणसमर्थश्च संजायते।

इति प्रमुखाः संस्कारा उक्ताः शेषाश्च मूलग्रन्थतोऽवगन्तव्याः।

## रसाचार्याः, रससाहित्यञ्च

प्रागुक्तं रसोत्पत्तिप्रकरणे यद्रसप्रादुर्भावः शिवात्संजात इति। अतो रसविद्याया आदिप्रवर्तकोऽपि स एव भगवान् शङ्करः। तेन चेयं विद्या देवेभ्यो दत्ता तैश्च स्वबुद्धिवैभवेन तद्विषयका ग्रन्थाः प्रणीताः। एतेषां ग्रन्थानां नामानि श्लोकसंख्या चास्मिन्नेव भूतिप्रकरणे प्रथमपटले ( १११ श्लोकात् १२३ श्लोकं यावत् ) इत्थं परिगणिता—

| प्रणेता | ग्रन्थः | श्लोकसंख्या |
|---|---|---|
| उमा | रसमहोदधिः | १२००० |
| ,, | रसोपनिषत् | ६००० |
| गुहः | रसतन्त्रम् | ६००० |
| वीरभद्रः | ,, | १००० |
| शुक्रः | रसावलोकः | ६००० |
| वृहस्पतिः | रसचक्रम् | ८००० |
| चन्द्रः | रसाङ्कुशः | १०००० |
| विनायकः | रसोदयः | ८००० |

अतः परमपि स्वच्छन्दादय एतद्विषयकान् ग्रन्थान् प्रणेष्यन्तीत्यपि तत्र निर्दिष्टम्।
रसरत्नसमुच्चयादौ रससिद्धानां सप्तषष्टिनामानि प्रदर्शितानि—

आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः।
कपाली मत्तमाण्डव्यो भास्करः शूरसेनकः ॥१॥
रत्नकोशश्च शम्भुश्च सात्त्विको नरवाहनः।
इन्द्रदो गोमुखश्चैव कम्बलिर्व्याडिरेव च ॥२॥
नागार्जुनः सुरानन्दो नागबोधिर्यशोधनः।
खण्डकापालिको ब्रह्मा गोविन्दो लम्पको हरिः ॥३॥
रसाङ्कुशो भैरवश्च नन्दी स्वच्छन्दभैरवः।
मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा ॥४॥
महादेवो नरेन्द्रश्च रत्नाकरहरीश्वरौ।
कोरण्डकः सिद्धबुद्धः सिद्धपादश्च कन्थड़ी ॥५॥
ऋष्यशृङ्गो वासुदेवः क्रियातन्त्रसमुच्चयी।
रसेन्द्रतिलकश्चैव भानुकर्मेरितस्तथा ॥६॥
पूज्यपादश्च काणेरी नित्यनाथो निरञ्जनः।
चर्पटी विन्दुनाथश्च प्रभुदेवोऽथ वल्लभः ॥७॥
बालाकिर्यज्ञनामा च घोडाचोली च टिण्टणी।
कालाचार्यः सुबुद्धिश्च रत्नघोषः सुसेनकः ॥८॥
इन्द्रद्युम्नश्चागमश्च तथा कामारिरेव च।
वाणासुरो मुनिश्रेष्ठः कपिलश्च वलिस्तथा ॥९॥

इत्यादयो महासिद्धा रसयोगप्रसादतः ।
जीवन्मुक्ताः प्रशान्ताश्च स्वेच्छारूपधरास्तथा ॥१०॥
भक्त्या स्मरणमात्रेण रससिद्धिप्रदायकाः ।
खण्डयित्वा कालदण्डं त्रैलोक्ये विचरन्ति ते ॥११॥ इति ॥

अयञ्चात्र निष्कर्षो यद् देवेषु—शिवः, उमा, गुहः, वीरभद्रः, शुक्रः, बृहस्पतिः, चन्द्रः, विनायकः, नन्दी, भैरवः, ब्रह्मा, विष्णुश्चैते रसाचार्याः ।

ऋषिषु—अगस्त्यः, कपिलः, व्याडिः, दत्तात्रेयः, मत्तमाण्डव्यादयः ।

मानवेषु—लङ्केशः, गोरक्षः, नागार्जुनादयश्च बहवः सिद्धा बभूवुः । एते सर्व एव न रसशास्त्रप्रणेतारः सन्ति, येषां ये ग्रन्थाः श्रूयन्ते त एवम्—

| ग्रन्थः | प्रणेता | ग्रन्थः | प्रणेता |
|---|---|---|---|
| रसेन्द्रसंहिता | | स्वच्छन्दतंत्रम् | भैरवः |
| दत्तात्रेय संहिता | दत्तात्रेयः | कपिलसिद्धान्तः | कपिलः |
| गोरक्षसंहिता | गोरक्षनाथः | ब्रह्मसिद्धान्तः | ब्रह्मा |
| अगस्त्यसंहिता | अगस्त्यः | लङ्केशसिद्धान्तः | रावणः |
| दत्तात्रेयतन्त्रम् | दत्तात्रेयः | चन्द्रसेनसिद्धान्तः | चन्द्रसेनः |
| काकचण्डीश्वरतंत्रम् | काकचण्डीश्वरः | रससुधाकरः | यशोधरः |
| हरीश्वर तन्त्रम् | | रसकामधेनुः | चूडामणिः |
| रसरत्नाकरः कक्ष<br>कक्षपुटम्<br>रसेन्द्रमङ्गलम् | नागार्जुनः | रसयोगसागरः | हरिप्रपन्नः |
| रसहृदयम् | गोविन्दभगवत्पादः | रसधातुप्रकाशः | मुले |
| रसपद्धतिः | विन्दुः | रसेन्द्रसारसंग्रहः | गोपालकृष्णभट्टः |
| रसरत्नाकरः | सिद्धनित्यनाथः | पारदसंहिता | निरंजनप्रसादगुप्तः |
| रसार्णवः | भैरवानन्दः | रसतरङ्गिणी | सदानन्दः |
| आनन्दकन्दम् | मन्थानभैरवः | रसामृतम् | यादवजी त्रिकमजी |
| रससारः | गोविन्दाचार्यः | धरणीधरसंहिता | धरणीधरः |
| रुद्रयामलम् | भैरवः | टोडरानन्दः | राजाटोडरमलः |
| रसरत्नसमुच्चयः | वग्भटः | रसशास्त्रप्रवेशिका<br>रसस्त्वविवेचनं च | कृष्णगोपाल आ. भ.<br>कालेडातः प्रकाशिते |
| रसेन्द्रचिन्तामणिः | रामचन्द्रः | | |
| | डुण्डुकनाथः | | |

एतदतिरिक्तं च चरक-सुश्रुत-भावप्रकाश-योगरत्नाकर-शार्ङ्गधरसंहितादिषु प्राचीनायुर्वेदग्रन्थेषु प्रायः सर्वेष्वेव रसप्रकरणं समुपलभ्यते। आधुनिकग्रन्थेषु च निरंजनप्रसादविरचितायां पारदसंहितायां विशदं विवेचनं स्वानुभूतप्रयोगाश्च रसस्य दृश्यन्ते।

## गोरक्षसंहिता–भूतिप्रकरणस्य वर्ण्यवस्तु

पूर्वोक्तेषु चतुर्षु रससंहिताकारेषु गोरक्षनाथस्यापि नाम गृहीतमेव, तेन च प्रोक्तेयं संहिता शतसाहस्री ( लक्षश्लोकात्मिका ) इति कादिप्रकरणस्य पुष्पिकातोऽवगम्यते। मन्ये तत्र बहूनि प्रकरणानि स्युः। बहुप्रयतनमानैरप्यस्माभिस्तु केवलं प्रकरणद्वयमेवोपलब्धं तदपि खण्डितप्रायम्। प्रथमं कादिप्रकरणं पूर्वभागरूपेण द्वितीयञ्चेदं भूतिप्रकरणं द्वितीयभागरूपेण प्रकाश्यते। यद्यप्यत्र भूतिप्रकरणे यद्यद्वर्णितं तद् विषयानुक्रमणीतोऽवगम्यत एव तथापि विशेषेण यदवधातव्यं तदत्र प्रस्तूयते। अस्मिन् प्रकरणे नव पटलाः सन्ति।

तत्र तावत्प्रथमे पटले—रसकर्मणि कीदृशाः सहाया अपेक्ष्यन्ते इति निरूप्य रसस्य महिमा, तस्याष्टौ गुणाः, तत्संस्करणजन्यं पुण्यं, संस्कृतरसस्योपयोगः, शिवोक्तस्य रसशास्त्रस्य विस्तरश्च वर्णितः। अत्र रसमहिमावर्णनप्रसङ्गेन तत्प्रयोजनमप्युक्तम्—

**आमयान्मूर्छितो हन्ति ह्यमरत्वं मृतो भवेत्।**
**खेचरत्वाणिमाद्यं तु येन बद्धस्तु सूतकः॥ इत्यादि॥**

**द्वितीयस्तु पटलः**—परिभाषापटल इति वक्तुं शक्यते, यतो ह्यत्र रसानामुपरसानां, रसलौहानामायसषट्कस्य, गरुडोद्गारस्य, पञ्चरत्नानां, मणिसंज्ञकरसस्य, मणित्रयस्य, सूतकनिबन्धकपदार्थानां च नामानि, लक्षण रीक्षे च स्फुटं निर्दिष्टे एतेष्वशुद्धेषु रसकर्मणि प्रयुक्तेषु तन्निष्फलत्वं च वर्णितम्।

**तृतीयपटले**—रसस्याष्टादश संस्काराः परिगणितास्तद्विधिश्च वर्णितः, धातूनां रत्नानां च शुद्धिः, अभ्रकादि सत्त्वपातनं, स्वर्णरजतकारकबीजविधानं चोक्तम्। अत्र संस्काराणामष्टादशत्वे परिगणितेऽपि विधिस्त्वष्टानामेवोक्तः, यतो ह्यष्टसंस्कारानन्तरमेव रसः प्रयोगार्हो भवितुं शक्नोति। विशेषगुणवत्ताप्त्यै तस्यान्ये संस्कारा भवन्तीति तद्भावः।

**चतुर्थपटले**—रसबन्धनप्रक्रिया निर्दिष्टा, मूलतस्तस्य द्विकलङ्कादि चत्वारो भेदाः प्रदर्शितास्ततश्चौषधिप्रभावाद् द्रुतितः, अभ्रादियोगात् रसबन्धनं सर्वलोहबन्धनं विविधबीजबन्धनं च विहितम्। ततो रक्तस्नेहनिषेकेण, रसोपरसयोगेन, रसलोहसङ्करतया, षड्लोहसङ्करतया, रत्नादिसङ्करतया च रसबीजत्वमुक्तम्। माक्षिकादिभिर्मृतस्य हेम्न उत्कर्षकरत्वं विभिन्नद्रव्यैर्मारितनागवङ्गताम्ररजतहेमलोहैर्बीजान्युपवर्ण्य कथं समेन कलवेधी, द्विगुणेन द्विगुणवेधीत्यादि शत-सहस्र-लक्ष-कोट्यर्बुदादिस्पर्शवेधी रसो भवतीति प्रतिपादितम्। अनेकविधसत्त्वनिःसारणम्, रसशालायां रसकर्मणि च क्रियाकुशलानां शास्त्रविदां च नियुक्तिविधानमुपदिष्टम्।

**पञ्चमपटले**—विविधलवणारनालादियोगेनाभ्रकग्रासस्य रसे विधानम्, विविधधातूनामौषधीनां च योगेन रसबन्धनम्, मुखचारणा-निर्मुखचारणाप्रकारः रसबन्धोपयोगि चतुःषष्टिमहौषधीनां नामानि, ग्रासानन्तरमष्टविधरसस्वरूपप्रदर्शनम्, ग्रासमानानि गर्भद्रुतिः, मुखबन्धः, यन्त्रैः पातनप्रक्रिया, पिण्डजारणं, जीर्णस्य लक्षणानि, क्रामणक्रिया, तदुपयोगार्हा औषध्यश्च, रञ्जकौषधिसंयोगाद्विविधजाम्बूनदोत्पत्तिः, क्रमितरससेवनफलम्, रसकामधेनुविधानम्, अभ्रकतीक्ष्णादीनां पृथक् पृथक् चारणस्य श्रेष्ठत्वमभ्रकग्रासेन च तस्य बलवत्त्वमत्र प्रदर्शितम्।

**षष्ठः पटलः**—व्यावहारिकदृष्ट्यातीव महत्त्वपूर्णः, यतोह्यत्र सूर्यकान्तादिमणिभिः रसबन्धनानन्तरं रसस्य रञ्जन-जारण-सारणप्रक्रियाभिर्वेधक्रमो वर्णितस्तेन च तारताम्रनागानां कोटिवेधं कृत्वोत्तमस्वर्णोत्पत्तिर्भवति। रक्ताभ्रहेमभ्यां रसबन्धनेन शतसहस्रलक्षवेधिरसस्य रक्तिकादिक्रमेण भक्षणात् बल्यमायुष्करत्वं च लभ्यते। धातूपरसपारदपिष्ट्या पत्रलेपनात्स्वर्णोत्पत्तिः गन्धकशुद्धिद्रुतिभ्यां स्वर्णनिर्माणं, तस्यैव सहस्र-लक्षकोटिवेधनात् जाम्बूनदस्वर्णोत्पत्तिः गन्धकशोधनार्हा दशौध्यश्चात्र निर्दिष्टाः। अर्थप्रधानेऽस्मिन्युगेऽस्य पटलस्यातीवोपयोगित्वं वर्तते। धातूनां रससंयोगात् केन केन साधनेनोत्तममध्यमाधमेषु प्रकारेषु किं प्रकारकं सुवर्णं निर्मातुं शक्यते, इत्यत्र विस्तरेण निगदितम्।

**सप्तमे पटले**—अचिन्त्यगुण-रस-पाक-वीर्यप्रभावानामौषधीनां विशेषेण रसबन्धकराणां वर्णनप्रसङ्गेन पूर्वमौषधि-महौषधिभेदाद्द्विविधत्वं ततो दिव्यौषधि-रसौषधिभेदात्पुनर्द्विविधत्वं तृणगुल्मलतावल्लीवृक्षसर्पिणीभेदात् षड्विधत्वं च प्रदर्श्य चतुःषष्टिदिव्यौषधीनां नामानि, लक्षणानि, कर्माणि चोक्तानि, अत्र ग्रन्थान्तरेभ्य इदं वैशिष्ट्यं दृश्यते यत् सोमो द्विविधः वृक्षरूपो लतारूपश्च, द्वयोरपि समानवीर्यत्वे लतारूपस्योत्कृष्टत्वम्, लतापि द्विविधा सविषा निर्विषा च। तयोः सविषाऽधिकगुणवती निर्विषा च स्वल्पगुणवतीत्यादि। एवं सोमादीनां स्वरूपलक्षणादि परिचयो दत्तः। एताश्चौषध्यः कुत्र प्रादुर्भवन्ति कथं च ता ग्राह्या इति चोक्तम्। एवमेवाम्लवेतसस्यापि उत्पत्ति-स्वरूप-लक्षण-गुण-कर्मणां विस्तरेण वर्णनं तेन च रस-रसायन-गुटिका-खेचरीगति-स्वर्णनिर्माण-लक्षकोटिवेधादीनां च वर्णनं कृतम्। एकेनैवाम्लवेतसेन कठिनानामपि रोगाणां चिकित्सा कथं कर्तुं शक्येतेति निर्वर्ण्य रसायनसेवनकाले पथ्यापथ्यविचारो निर्दिष्टः। अत्र पटले मूलमातृकाया चतुर्णां पत्राणां विनष्टत्वात् प्रायः ६१ श्लोका न लब्धाः।

**अष्टमे पटले**—अयस्कान्तस्योत्पत्तिः, तल्लक्षणस्वरूपे, तद्वीर्यं तेन रसबन्धनप्रकाराश्च विस्तरेण दर्शिताः। कान्तायसयोगविहितरसायनोपयोगेन जरामृत्युकुष्ठवलीपलितादिनाशविधिं निर्वर्ण्य तत्तद्रोगेषु तत्तदनुपानस्य पृथग्विधानं वर्णितम्। रसविषयकं सकलकर्म गुरुपरम्परयाप्राप्तसंस्कारैरेव कर्तव्यमिति च निर्दिष्टम्।

अत्रपटले मध्येमध्ये मूलमातृकायाः संभूय प्राय २६ पत्राणामभावाद् भूयसां रहस्यानामुद्घाटनं न जातम्। एष्वेव खण्डितपत्रेषु अष्टमपटलसमाप्तिर्नवमस्य प्रारम्भतश्चतुःसप्तति श्लोकपर्यन्तोंऽशो नास्ति।

अवशिष्टे च नवमे पटले—शास्त्रोक्तविधानेनौषधीनां नियोजनविधिः, रसमन्त्रोद्धारः, तत्फलतस्तुतिश्च वर्णिता।

संक्षेपेणेदमेवास्य भूतिप्रकरणस्य वर्ण्यवस्तु।

## प्रस्तुतं संस्करणम्

प्रथमस्य कादिप्रकरणस्य खण्डितांशमन्वेषयता मयाऽस्य भूतिप्रकरणस्यैकामातृकोपलब्धा सा च षष्ठपटलस्य २३० श्लोकपर्यन्तैवासीदशुद्धिबहुला जीर्णप्राया च। अनन्तरं श्रीमतां काशिराजमहाभागानां सरस्वतीभण्डारतो लब्धमातृकातः शेषोंऽशः पूरितः। सापि मातृका मध्ये मध्ये प्रायः २६ पत्राणामभावात् खण्डितप्रायैव। एवं कृत्वा यावानंश उपलब्धस्तावानत्र यथामति संशोध्य सम्पादितः।

अत्र भाषागतं शैथिल्यं, व्याकरणविषयका अशुद्धयः, छन्दश्च्युत्यादयश्च बहुत्र वर्तन्ते तत्र मया न किमपि स्वकीयं पाण्डित्यमारोपितम्, मूलस्थः पाठो यथावदुद्धृतः यत्रार्थसंगतिर्न दृष्टा तत्र स्वकीयः संभावितपाठः [ ] कोष्ठान्तर्धृतः। यथा प्रथमे कादिप्रकरणे तान्त्रिकाणामेवाधिकारस्तथैवात्रापि भूतिप्रकरणे केवलं रसविदामेवाधिकार इति भृशं मन्ये, तथाप्यस्य सम्पादने ममैकमेवोद्देश्यमासीत् यत्कथमपीदमुपादेयं ग्रन्थरत्नं विपश्चितामधिकारिणां पुरत उपस्थाप्येत इति, तदर्थमेवायं मे प्रयासः। सप्रश्रयं साञ्जलिबन्धं च कृपाधनान् विपश्चितो विनिवेदये यदेनमधीत्य शास्त्रान्तरोक्तप्रकारैः स्वानुभूतप्रयोगैश्चात्र वर्णितान् विविधविधीन् प्रयोजयद्भिस्तत्रभवद्भिर्यथास्थानं संशोध्य यदि क्वाप्यस्य खण्डितोंऽश उपलभ्येत चेत् सूचनीयोऽहम्, यथाग्रिमे संस्करणेऽस्य पूर्णता स्यादिति।

अन्ते च श्रद्धेयकाशिराजश्रीमद्विभूतिनारायणसिंहमहाभागानामुपकृतिं भूरिशः स्मरामि येषां कृपयैव सरस्वतीभण्डारस्थमातृका सुलभाऽभवत्। संपादने संशोधने च यत्र कुत्रापि परामर्शं दत्वा राजकीयायुर्वेदविद्यालयवाराणसीस्थ द्रव्यगुणविभाग भू० पू० प्राध्यापक न्यायायुर्वेदाचार्य श्री श्यामसुन्दरशुक्ल महोदयस्य, तत्रैव विभागे प्राध्यापक श्री कैलासपतिपाण्डेयमहोदयेन चोपकृतोऽहमिति तौ साधुवादैरभ्यर्थये।

अन्ते च गुणमात्रैकपक्षपातिनो विद्वद्धौरेयाः पुन प्रार्थ्यन्ते यत्—

**या कापि गुणितास्तीह ग्रन्थकर्तुर्हि साखिला।**
**दोषलेशाय प्रतिभूर्मदीयानवधानता॥**

सरस्वतीभवनम्
मकरसंक्रान्तिः २०३३

विद्वच्चरणचञ्चरीको
**जनार्दनशास्त्री पाण्डेयः**

# गोरक्षसंहिता-भूतिप्रकरणस्य

## विषयानुक्रमणी

# प्रथमः पटलः

श्रीकण्ठ उवाच

सहायसहिता सिद्धिर्द्रव्यमन्त्रतपोयुता ।
राज्ञोऽधिकारिपुरुषाः परायत्ताश्च ये नराः ॥ १ ॥
पशवोऽधिकाररहिता विशेषज्ञानवर्जिताः ।
पापिष्ठा द्रव्यहीनाश्च क्रोधलोभसमन्विताः ॥ २ ॥
असत्त्वा गुप्तिरहिता नित्यं कपटवर्त्तिनः ।
धर्मज्ञानविनिर्मुक्ताः प्रजापीडनतत्पराः ॥ ३ ॥
न तैः सह समायोगः कर्तव्यो रससाधने ।
रसकर्म च विज्ञानं मन्त्रशास्त्रौषधीर्बलम् ॥ ४ ॥
मणिरत्नं सिद्धिकार्यं नैव तेषां प्रकाशयेत् ।
यदा प्रकाशस्तेषां [वै] सह तैस्तु प्रसाधयेत् ॥ ५ ॥
नैव सिद्धिमवाप्नोति तथा [अथ] वा दैवयोगतः ।
कदाचित्सिद्धिमायाति तदानुसंहरेद् ध्रुवम् ॥ ६ ॥
विज्ञानार्थी च द्रव्यार्थी धनवल्यं (?) च कारयेत् ।
निर्दयाः पापमतयो द्रव्यलोभसमन्विताः ॥ ७ ॥
अतिपात्रे (?) तु संस्थं तु शास्त्ररत्नं मणिं रसम् ।
द्रव्यं चापहरेत् क्षिप्रं वधबन्धं च कारयेत् ॥ ८ ॥
तस्माद् गुप्ततरा कार्या रसविज्ञानसंहिता ।
नान्यत्तु शोभनं किञ्चिन्नान्यत्किञ्चिदशोभनम् ॥ ९ ॥
अज्ञानाल्लोकहास्यं तु अङ्गक्लेशकरं भवेत् ।
अर्थक्षयं तथोद्वेगं व्यसनस्य प्रदायकम् ॥ १० ॥
सतृप्तं व्यसनं चैतत्संजातं न त्यजेत् क्वचित् ।
ज्ञानाद्भोगप्रदे[दं] त्वेतत् सर्वसिद्धिप्रसाधनम् ॥ ११ ॥

राज्यप्रसाधनं चैव सर्वभूतवशङ्करम् ।
साधनं देवदेवानां राजमृत्युविनाशनम् ॥ १२ ॥
अविज्ञाते तु न भवेत् सम्यग् ज्ञात्वा तु कारयेत् ।
ये नराः शुद्धमनसो महाकुलसमुद्भवाः ॥ १३ ॥
वीरा वीरप्रचण्डाश्च धनवन्तो महायशाः ।
तृणे च काञ्चने येषां समं चित्तं समास्थितम् ॥ १४ ॥
प्रतिष्ठाः सर्वशास्त्रेषु सिद्धान्ते वामदक्षिणे ।
विशेषमार्गसंपन्ना हानिवृद्धिसमाः सदा ॥ १५ ॥
सिद्ध्यसिद्धिसमा नित्यं शूरास्त्यागसमन्विताः ।
असिद्धे नोपहासेन[हसति] सिद्धे तु नाभिनन्दति ॥ १६ ॥
मन्त्रतन्त्रैः सहैतेन सिद्धिं साधनमेव च ।
रसकर्मादिकं ज्ञानं सह तेनैव कारयेत् ॥ १७ ॥
मृत्युदारिद्र[द्र्य]संयुक्तः सिद्धिमायाति सत्वरम् ।
मदोन्मत्तो गजो ह्येष दारिद्र्यतनुसंभवः ॥ १८ ॥
वने च रमते तावत् परिभूतासने रतः ।
न शृणोति विधिं यावद्भवजस्य निबन्धने ॥ १९ ॥
आशु पञ्चाननस्येव नादं श्रुत्वा त्यजेत् क्षणात् ।
रसोपरसदंष्ट्राणि अग्निजिह्वारसायनम् ॥ २० ॥
हेमतारनखः सिंहो द्रारिद्र्यकरिदारणः ।
कृष्णजीमूतनिशितो निशायां व्योम्नि सर्वतः ॥ २१ ॥
शनिरश्मिनिरुद्धे तु अलिर्लीनो न दृश्यते ।
तद्वज्ज्ञानविहीनो [नाय] स्वभूतयो [भूतीः] न प्रकाशयेत् ॥ २२ ॥
तस्माज्ज्ञानं तु वक्तव्यमायुर्भूतप्रसाधनम् ।
दारिद्र्यमेव दुःखं च क्लेशदोषावि[दि] दुःसहम् ॥ २३ ॥
नान्यथा प्रशमं यान्ति विना तद्वादरश्मिभिः ।
यथार्करश्मिसंघातं क्षणं शीतापहं भवेत् ॥ २४ ॥

दारिद्र्यजं तथा दुःखं हीयते वादरश्मिभिः ।
सिद्धिकर्मप्रदं ह्येतन्मुनयोऽपि न दास्यते (?) ॥ २५ ॥
किं पुनर्मानुषाः क्षुद्रास्तस्माद्वादं तु सिद्धिदम् ।
शास्त्रात्तु ज्ञायते सर्वं यथावत्कर्मयोगतः ॥ २६ ॥
शिवपूजाविधानेन दीप्तमन्त्रैर्लभेद्रसम् ।
तपसा वा भवेत् प्राप्तिर्भूतयो[तीनां] नैव चान्यथा ॥ २७ ॥
भवजस्य क्रियां ज्ञात्वा भुक्तिं मुक्तिमवाप्नुयात् ।
साक्षाच्छिवः समाख्यातो भवजः पुण्यदायकः ॥ २८ ॥
शिवो यथा पूज्यमेतद्बीजं प्रोक्तं शिवोद्भवम् ।
दर्शनात् स्पर्शनाच्चैव भुक्तिमुक्तिप्रदो भवेत् ॥ २९ ॥
सर्वजीवमयो ह्येष सर्वभूतेषु संस्थितः ।
सर्वरत्नप्रधानस्तु पवित्रः पुण्यदायकः ॥ ३० ॥
अस्यैकस्य महान् दोषो यदि सह्यस्तु वह्निना ।
सह्यं येन कृतं देवि वह्निना सूतकस्य च ॥ ३१ ॥
साधितं (?) अमरत्वं च महद्भूतिं समाप्नुयात् ।
सर्वभूतमयो ह्येष पञ्चभूतैरधिष्ठितः ॥ ३२ ॥
अक्षयो ह्यमरश्चासौ मम देहाद्विनिर्गतः ।
दिव्यभूतात् समायातो भवजः पाञ्चभौतिकः ॥ ३३ ॥
आर्द्रत्वे त्वाप उद्दिष्टं घनत्वे पृथिवी स्थिता ।
चापल्ये संस्थितो वायुस्तेजस्तेजःसमाश्रितम् ॥ ३४ ॥
सूक्ष्मत्वात्तु तस्यैवं (?) आकाशं तु व्यवस्थितम् ।
न तस्य पृथिवी तत्त्वं घनत्वापादने क्षमा[मम्] ॥ ३५ ॥
नासौ क्लिद्यति तोयेन अग्निना नैव दह्यते ।
वातेनोड्डीयते नैव तूलवच्च कदाचन ॥ ३६ ॥
अनिलेन त्वसौ नैव कदाचिच्चैव शुष्यति ।
रसो नाकाशहीनोऽपि कश्चिद्धा[द्ध]रयितुं क्षमः ॥ ३७ ॥

न तेन देवदैत्याश्च न सिद्धा न च गुह्यकाः ।
गच्छन्ति तेन मार्गेण येन गच्छति सूतकः ॥ ३८ ॥
न तेन चानिलो याति न चाग्निः सलिलं नहि ।
अतिसूक्ष्मेण रन्ध्रेण येन गच्छति सूतकः ॥ ३९ ॥
निक्षिप्य आयसे यन्त्रे त्वरन्ध्रे सन्धिवर्जिते ।
कीर्त्तितो निगडैर्बद्धो यावच्चोष्मा विभावशा (सौ ?) ॥ ४० ॥
सन्धिरन्ध्रविनिर्मुक्तः सिद्धयोगीव निष्क्रमेत् ।
महाशृङ्खलयन्त्राणि स्तम्भयेत् स सुकीलनात् ॥ ४१ ॥
अग्नितापात् क्षणेनैव भवेन्नागबलोपमः ।
महास्तनितनादेन बलान्निवीसते [न्निविशते] जलम् ॥ ४२ ॥
नभस्तलं चोत्पतेत संघाताद्वायुरूपिणः ।
सूक्ष्मीभूत्वा क्षितौ तिष्ठेदनिवार्यो दुरासदः ॥ ४३ ॥
अग्राह्यश्च शिवो ह्येष ज्ञानकर्म विना रसः ।
तस्याष्टौ च गुणाः सिद्धाः प्रकटाः सुमहाद्भुताः ॥ ४४ ॥
गुरोर्गुरुतरो ह्येष नान्यद् गुरुतरो भवेत् ।
लघोर्लघुतरो ह्येष नान्यल्लघुतरो भवेत् ॥ ४५ ॥
व्रजेज्जलस्योपरितो लघुत्वे तु व्यवस्थितः ।
अणोरणुतरो ह्येष न चान्ये ह्यणुरूपिणः ॥ ४६ ॥
व[ब]द्धस्य महिमा चैवं नान्यस्य महिमाद्भुतः ।
प्रयोगाप्तिस्तु बद्धेन सुप्रकाम्या तु सर्वतः ॥ ४७ ॥
ईशत्वं सर्वतस्तस्य वशित्वं च महामरैः ।
बद्धेनैवोपयुक्तेन यतितुल्यगुणो भवेत् ॥ ४८ ॥
अणिमादिगुणावाप्तिर्जायते नात्र संशयः ।
महाक्लेशेन योगीव प्राप्नुयान्नैवमेव तत् ॥ ४९ ॥
बद्धेनैवोपयुक्तेन सर्वज्ञेन लभेद् ध्रुवम् ।
खेचराद्यणिमावाप्तिं लभते ह्यचिरेण सः ॥ ५० ॥

आमयान्मूर्छितो हन्ति ह्यमरत्वं मृतौ भवेत् ।
खेचरत्वाणिमाद्यं तु येन बद्धस्तु सूतकः ॥ ५१ ॥
बद्धेनेन्द्रं च धनदं यमं जयति सत्व[र]म् ।
लोकपालान् सुरान् सिद्धान् दैत्यानुरगदानवान् ॥ ५२ ॥
यक्षरक्षोग्रहानुग्रान् जयेन्नैवात्र संशयः ।
महाबलसमोपेतचक्रवर्तिसमं नृपम् ॥ ५३ ॥
बलशौर्येण दानेन रससिद्धो जयेत् सदा ।
एते गुणास्तुः सहजाः सूतकस्य महात्मनः ॥ ५४ ॥
शिवबद्धव्यापको ह्येष सर्वधातुगतो रसः ।
अबद्धो वाऽथ बद्धो वा व्यापकः सर्वजो भवेत् ॥ ५५ ॥
यन्त्रलोपेन सहसा गरुडे शशिभास्करे ।
उत्पले चन्द्रके लीनो बाह्यस्थो विशते रसः ॥ ५६ ॥
सर्वायासगतो बद्धो व्यापकः किञ्चिदग्निगः ।
उत्तमत्वप्रदो ह्येष षड्बीजसमयोजितः ॥ ५७ ॥
यथा स्वायम्भुवैर्बीजैर्दीप्तैराशु नियोजितः ।
पातितत्वसमोपेतैर्बीजैस्तैस्तु पतित्वताम् ॥ ५८ ॥
बीजद्वयसमोपेतमुत्तमत्वं च नीयते ।
अबद्धस्य गुणाश्चान्ये लोकविस्मयकारकाः ॥ ५९ ॥
आयसं च कृतं यन्त्रमष्टाप्द[?]ष्टहस्तकम् ।
चतुर्भिरष्टभिर्वाऽथ दिशासु विनिवेशयेत् ॥ ६० ॥
शृङ्खलैर्लोहताम्रस्थपलानां तु शतद्वयम् ।
गुहागतं तु तत्कार्यं शृङ्खलाभिः सुयन्त्रितम् ॥ ६१ ॥
यूपाधः खादिराङ्गारैर्मृदुमग्निं तु कारयेत् ।
मध्यानुमाना नलिका ह्यायसा त्वग्निसंस्थिता ॥ ६२ ॥
मध्यस्थश्चालयेद्भस्त्रामेकां सर्वमुखीं सुताम् ।
वृत्तां तु कक्ष[च्छ]पाकारां चालयेत्तु मनाङ्मनाक् ॥ ६३ ॥

नवाधस्तत्रसंस्था[श्] च त्रिरूर्ध्वमस्तु[स्त्र]जापिनः।
बलाग्निधारणोपेतं[तान्] दीप्तमन्त्रान् समुच्चरेत् ॥ ६४ ॥
चक्रे वा अम्बुजे वाथ आयसेनोपरि स्थिताः।
उत्पत्ते [तेत्] गगनाभोगमग्नितापः शनैः शनैः ॥ ६५ ॥
ब्रह्माण्डस्योर्ध्वखण्डे च विचरेदग्नितापनात्।
यन्त्रमध्ये भवेत्कीलं रेचकेनाङ्घ्रियोगतः ॥ ६६ ॥
मथेदष्टदिगाभोगे कुम्भकेन निरोधयेत्।
अग्नितापं शनैर्दत्वा शीतलेन क्षितिं व्रजेत् ॥ ६७ ॥
धारणा[द्] देहसंस्थस्तु सर्वरोगहरो भवेत्।
अग्निसोमार्कसंलीनः सृष्टिहृष्टानुसंयतः ॥ ६८ ॥
विषाग्निशस्त्रसंपातैः[त-] क्रूरसत्त्वामयान् यजेत्[जयेत्]।
वशीकरोति भूतानि सर्वविघ्नहरो भवेत् ॥ ६९ ॥
अबद्धस्य[?] बीजानि बद्धो दिव्याञ्जयेद्रसः।
यत्र तिष्ठति गेहान्तस्तत्र रक्षा सदा भवेत् ॥ ७० ॥
उरगाग्निदस्य[स्यु]दुष्टा न छत्र [क्षेत्रं]प्रभवन्ति ते।
वने पथि जले वाऽथ दुष्टे रक्षाकरो भवेत् ॥ ७१ ॥
यत्र तिष्ठति देहस्थो मन्त्रलब्धस्तु सर्वजः।
दुष्कृतं त्वापदो रोगा न तस्य प्रभवन्ति ते ॥ ७२ ॥
चण्डी च लङ्घनं नैव समयाचारलङ्घनम्।
गुरोर्द्रोहः शिवद्रोहो मन्त्रविघ्नैर्न गृह्यते ॥ ७३ ॥
सर्वविघ्नविनिर्मुक्तः शुभैर्मन्त्रैः शिवं जयेत्[यजेत्]।
एते तस्य गुणाः सन्ति किं न सिध्यति सूतकः ॥ ७४ ॥
रसोत्तमेन संयुक्तो मध्यमेनाऽधमेन वा।
सवेदिकं कृतं लिङ्गं व्योमयुक्तोऽथ सर्वजः ॥ ७५ ॥
स्वच्छन्दास्तु मयाऽऽख्याता अग्निष्टोमहृदाणुना।
दशदा[धा] स्मरणेनाथ संवत्सरमखेन वा ॥ ७६ ॥

वर्णिस्वरमहालक्ष्मीकामोदयमहोदयैः ।
खेचरीचक्रयोगेन महामारीमखेन वा ॥ ७७ ॥
उत्तरोत्तरकालाख्यो मातृतन्त्रहृदाणुना ।
स्वच्छन्दः कौलवे[-नाथ] वर्षाविद्यामुखेन वा ॥ ७८ ॥
स्वायंभुकौलवेनाथ दीप्ताद्येन मखेन वा ।
एभिरेतत्क्रमेणैव भवजं दू [पू] जयेत् सदा ॥ ७९ ॥
अथ तेन कृतं लिङ्गं स[र्व]सिद्धिमवाप्नुयात् ।
सिद्धयन्त्रं प्रतिष्ठन्ति खेचराद्यणिमाष्टकम् ॥ ८० ॥
दीप्ताघोरेण योगेन पूज्यमानस्तु सर्वजः ।
सिद्धो नैवात्र संदेहः स्पर्शात्तस्य महोदयः ॥ ८१ ॥
जरादारिद्र्यमृत्युघ्नः स एवं नात्र संशयः ।
पुण्यश्चैव पवित्रश्च सर्वपापक्षयङ्करः ॥ ८२ ॥
दर्शनात् स्पर्शनाच्चैव श्रवणात् सूतकस्य तु ।
सर्वाग्निमुखदेवाश्च ध्यानाहार (?) भवन्ति ते ॥ ८३ ॥
कः करिष्यति सूताग्यै[ग्न्यो]र्मेलनं साधुपुङ्गवः ।
सर्वे स्तुवन्ति वरदा आयुष्यं च प्रयच्छति ॥ ८४ ॥
महदेतत्कृतं पुण्यं सत्कृतं सूतबन्धनम् ।
एकतः सर्वयज्ञास्तु एकतः सूतकः कृतः ॥ ८५ ॥
शतकोटिसहस्रेण सूतकस्तु विशिष्यते ।
एकं हि तद्भवेद्वित्तं येन बद्धस्तु सूतकः ॥ ८६ ॥
एको हि स पुमांल्लोके सूतको येन भक्षितः ।
यत्पुण्यं संस्कृते सूते विधिना शास्त्रकर्मणा ॥ ८७ ॥
न तत्पुण्यं भवेदेव अश्वमेधशतैरपि ।
सुपात्रेषु यथा दानं सुक्षेत्रे बीजसंततिः ॥ ८८ ॥
तथा रसगते सूते न नाशमुपगच्छति ।
सर्वेषां चैव दानानां हेमदानं महागुणम् ॥ ८९ ॥

पात्रेषु वहि[ह्नि]र्गुणवान् सूतकः शिववत्स्वयम् ।
तेषु दत्तं महापुण्यं कल्पान्तरशिवाक्षयम् ॥ ९० ॥
सर्वपात्रेषु लभते भोगं तत्पारलौकिकम् ।
जन्मान्ते वेह लभते भोगान् भूरिगुणोदयान् ॥ ९१ ॥
एकाग्रभावः सततं वह्नौ सूतकदानतः ।
एतत्कर्म न कुर्वन्ति दारिद्रा[द्र्यो]पहता नराः ॥ ९२ ॥
मूढाः कुबुद्धिवशगा अल्पपुण्या निरुद्यमाः ।
स एव एकः पुरुष[-स्तत्]तीर्थं च तपोवनम् ॥ ९३ ॥
विधिना संस्कृतो येन सर्वजः सर्वकामदः ।
तदेकं भूतलं पुण्यं रसज्ञो यत्र तिष्ठति ॥ ९४ ॥
स देशोऽपि भवेत्पुण्यो यत्र तिष्ठति नित्यशः ।
भवजेन तु बद्धेन उपयुक्तेन मानवः ॥ ९५ ॥
महद्भूतिमवाप्नोति खेचराद्यणिमाष्टकम् ।
एते गुणा रसेन्द्रस्य बद्धस्य तु विधानतः ॥ ९६ ॥
एभिर्गुणैः समानत्वं यदि योगीशमाप्नुयात् ।
गुरुणा संप्रयुक्तेन उपदेशेन तत्त्वतः ॥ ९७ ॥
कालान्तरवशाज्ज्ञानी प्राप्नुयान्नैव ते गुणाः ।
पुण्योऽमृतोपमो ह्येष देवानां तृप्तिदायकः ॥ ९८ ॥
सूतकेन कृतं हेम तेन यागो यदा कृतः ।
तत्पुण्यं च पवित्रं च देवास्तृप्तिमवाप्नुयुः ॥ ९९ ॥
रसविद्धं पवित्रं तु यत्कृतं चाङ्गुलीयकम् ।
तेन हस्तेन यत्किञ्चिद्दत्तं भवति चाक्षयम् ॥१००॥
धारितं चैव तद्देहे रुजोगरहरं भवेत् ।
सर्वयत्नेन सूतं तु सर्वायासेन संस्कृतम् ॥१०१॥
सर्वेण तपसा चैव सम्यग्ज्ञात्वा विधानतः ।
महद्भूतिमवाप्नोति खेचराद्यणिमाष्टकम् ॥१०२॥

क्रियावैकल्ययोगेन कदाचिन्न फलं भवेत् ।
तदा शिवस्य यद्दत्तं तद्दानफलमाप्नुयात् ॥१०३॥
अर्थस्य विनियोगे तु द्विधा ख्यातं च मान्यतः ।
स्वच्छन्दस्य च यजने सूतकस्य निबन्धने ॥१०४॥
द्वावेतावक्षयौ ख्यातौ दत्तनष्टास्तथापरे ।
अतिपात्रमयोरीश[?]स्त्वतिपात्रं हुताशनः ॥१०५॥
अतिपात्रं भवेत् सूतस्तेषु दत्ता[?] क्षयं भवेत् ।
त्रयः शिवाः समाख्याताः परात्परतराः पराः ॥१०६॥
भुक्तिसिद्धिप्रदाः ख्याता मुक्तिदा नात्र संशयः ।
सर्वयत्नाज्जपेदीशं सर्वयत्नात्तु होमयेत् ॥१०७॥
सर्वयत्नेन सूतं तु संस्कार्यं हि यथा तथा ।
लभते ईप्सितान् कामान् भुक्तिं मुक्तिं च साधकः ॥१०८॥
असाध्यं शत्रुदमनं महाराज्यं च भूतले ।
चक्रवर्तित्वमाप्नोति योगेश्वरपदं व्रजेत् ॥१०९॥
जरारुजं तथा मृत्युं जयेन्नैवात्र संशयः ।
भुवनेषु च भोक्तृत्वं लभते नात्र संशयः ॥११०॥
संहितार्थं विदित्वा तु येन बद्धस्तु सूतकः ।
पुरा तु विपुले ज्ञाने स्वच्छन्दे निर्गतं महत् ॥१११॥
पञ्चविंशसहस्राणि रसतन्त्रं मयाद्भुतम् ।
त्वयावधारितं सर्वं परापरविभेदतः ॥११२॥
तस्य मध्यात् पुरस्ताच्च रसतन्त्रमनेकधा ।
कथयिष्यामि देवानां गणतामुमया[उमायाः] तथा ॥११३॥
लोकानां तु हितार्थाय यजनार्थं शिवस्य च ।
महोदधेस्तु देव्यायाः सहस्रद्वादशैव तु ॥११४॥
अग्रतः कथयिष्येऽहं सोमं चैव महोदयम् ।
उमया[उमायाः] षट्सहस्राणि रसोपनिषदं मतम् ॥११५॥

षट्सहस्रं गुहस्यैव रसतन्त्रं महोदयम् ।
वीरभद्रस्य दास्यामि रसतन्त्रं महाद्भुतम् ॥११६॥
सहस्रमेकमानं तु महद्भूतिकरं शुभम् ।
रसावलोकं शुक्रस्य दास्येऽहं षट्सहस्रकम् ॥११७॥
बृहस्पते रसचक्रं सहस्राष्टकसंज्ञितम् ।
चन्द्रे रसाङ्कुशं दिव्यं सहस्राणि दशैव तु ॥११८॥
तथा विनायके चान्यद्रसतन्त्रं महोदयम् ।
रसोदयं तु परमं सहस्राष्टकमेव तु ॥११९॥
अग्रतस्तु भविष्यन्ति तन्त्राण्यष्टौ रसेशितुः ।
सर्व[र्वे] विनिर्गता ह्येते स्वच्छन्दे कोटिसंमिते ॥१२०॥
पञ्चविंशसहस्राणि रसतन्त्रं विनिर्गतम् ।
संहारस्तस्य षट् चैव सहस्राण्यर्धलक्षके ॥१२१॥
तस्य चैवोपसंहारं चतुर्विंशसहस्रकम् ।
अत्र विंशतिशतानि कथयिष्यामि तत्त्वतः ॥१२२॥
येन ज्ञानेन विधिवद् भुक्तिं मुक्तिमवाप्नुयात् ।
खेचरत्वाणिमाद्यं तु भुक्तिं च परमे पदे ॥१२३॥

इत्याद्यौ[द्ये] स्वच्छदे [न्दे] गोरक्षसंहितायां भूतिप्रकरणे
रसफलाफलवर्णनं नाम प्रथमः पटलः ॥ १ ॥



# द्वितीयः पटलः

शक्तिरुवाच

यद्येतत[द्येष] सर्वतः ख्यातः शिववत्सिद्धिदायकः ।
रुजाजरापहः ख्यातो मृत्युदारिद्र्यनाशनः ॥ १ ॥
खेचरत्वाणिमाद्यानि प्रयच्छति यदा हि सः ।
तदा वद च मे गुह्यं बन्धनं सर्वजस्य तु ॥ २ ॥
रसे रसायने चैव हेमतारकरो यथा ।
क्रियया जायते सूतस्तद् गुह्यं वद मे प्रभो ॥ ३ ॥

श्रीकण्ठ उवाच

शृणु शक्ते यथासंस्थं सूतकस्य निबन्धनम् ।
गुह्याद् गुह्यतमं ह्येतत् सर्वकामोदयं शुभम् ॥ ४ ॥
सर्वसिद्धिप्रदातारं महद्भूत्याशुदीपकम् ।
तत्रादौ तु रसः सूतः शिवदेहाद्विनिर्गतः ॥ ५ ॥
ततोऽन्यत्तु घनं ख्यातमुमायोनिसमुद्भवम् ।
सितं पीतं तथा रक्तं कृष्णं चैव तु वर्णतः ॥ ६ ॥
वज्राख्यं चैव माण्डूकं द्विविधं तु प्रकीर्तितम् ।
तत्स्थमग्निगतं वज्रं माण्डूकं विपुडा[ला]यते ॥ ७ ॥
मृदुनेष्टं तु यत्कार्यं वज्रं भवति शोभनम् ।
वैक्रान्तकः समाख्यातो नानावर्णः प्रकीर्तितः ॥ ८ ॥
वज्रवैक्रान्तयोर्भस्म द्विविधः संप्रकीर्तितः ।
धाम्यस्तु पतितो ज्ञेयो ह्यभेदी चार्द्रवस्तुतः ॥ ९ ॥
न चान्यत्सत्त्वे मिलति वज्रवैक्रान्तकः स्मृतः ।
भस्मीकरोति लौहानि त्वग्निगान्याकरेषु च ॥ १० ॥
वज्रवैक्रान्तको ह्येष रसकर्मणि युज्यते ।
विमलस्तु भवेच्चान्यो द्विविधः परिकीर्तितः ॥ ११ ॥

सितः पीतश्च वर्णेन गुरुः स्निग्धो घनस्तथा ।
रसकश्च भवेच्चान्यः पाषाणो गुडवन्मृदु ॥ १२ ॥
त्रिविधस्तु भवेत्पीतो मृत्तिकारसको वरः ।
गुडाभो मध्यमो ज्ञेयः पाषाणाभः कन्यंश [कनिष्ठकः] ॥ १३ ॥
शैलश्चतुर्विधो ज्ञेयो धाम्यो निपतितो भवेत् ।
अग्नितापेन यद्वर्णं तद्वर्णेन चतुर्विधः ॥ १४ ॥
माक्षिकं द्विविधं ज्ञेयं सितं पीतं तथैव च ।
चतुर्धागारसंस्थं तु विज्ञेयं क्षेत्रभेदतः ॥ १५ ॥
कदम्बगोलकाकारं कारवेल्लकसंनिभम् ।
तथाङ्गुलीयकं चैव चतुर्थः स्याथकरपरी (?) ॥ १६ ॥
वर्णतस्तु भवेद्रक्तस्त्रिविधो दरदो मतः ।
चमरिः शुकतुण्डस्तु हंसपादोत्तरोत्तरम् ॥ १७ ॥
सस्यस्त्वेकविधो ज्ञेयो ध्मातो निपतितो भवेत् ।
कालिका [मा]रहितो रक्तः ति[शि]तिकण्ठनिभोऽश्मकः ॥ १८ ॥
रसाश्चाष्टौ समाख्याता अभ्रवैक्रान्तसस्यकाः ।
शैलो विमलरसकौ माक्षिको दरदोऽष्टमः ॥ १९ ॥
संग्राह्या विधिवज्ज्ञात्वा रसाः सूतकबन्धने ।
महारसास्तु कथिताः संज्ञास्तु [सु] द्विविधो भवेत् ॥ २० ॥
शुक्लः पीतस्तु विज्ञेयो मृदुर्भवति शोभनः ॥ २१ ॥
पिण्डास्यः[ख्य.] पाटलः पीतस्तालको द्विविधो मतः ।
गैरिका तु भवेत्पीता भग्ना तु कनकप्रभा ॥ २२ ॥
वंशगुल्मसमुत्पन्ना पीता सा तु वरा स्मृता ।
गुरुश्चैव समाख्याता कठिना कृच्छ्रभङ्गुरा ॥ २३ ॥
शिला एकविधा ख्याता गुरुरक्ता विधीयमा (?) ।
कांक्षी तु द्विविधा ख्याता श्यामा च कपिला भवेत् ॥ २४ ॥
मृत्तिकाकारसंस्था तु अम्ला वै स्वादतो भवेत् ।
कासीसास्त्रिविधाः ख्याताः सिताः श्यामाश्च पीतकाः ॥ २५ ॥

सिता च पुष्पका सी[पी]ता सा निम्नुर्वी [?]मृदुर्भवेत् ।
तेजिष्ठा चैव यात्यम्ला नित्यार्द्रा शुक्लकारिका ॥ २६ ॥
श्यामा पीता भवेच्चाम्ला उत्तमा मध्यमाऽधमा ।
कृष्णं तु अञ्जनं ज्ञेयं गुरु स्निग्धं शुभं गुरु ॥ २७ ॥
कङ्कुष्ठं तु भवेत् पीतं लघु चैव गुरु शुभम् ।
अष्टावुपरसाः ख्याताः संज्ञा ह्येषां विधीयते ॥ २८ ॥
गन्धालगैरिकशिला कांक्षी कासीसमञ्जनम् ।
कङ्कुष्ठसहिता ह्येते संग्राह्या रसबन्धने ॥ २९ ॥
रसलोहानि चान्यानि कान्तजन्तुमु[खु]रायसम् ।
नानाकाराश्मजं चैव खञ्जवैक्रान्तकोद्भवम् ॥ ३० ॥
शैलजं सस्यकोद्भूतं माक्षिकामलजं तथा ।
रसलोहाः स्मृताश्चाष्टौ सर्वजस्य निबन्धने ॥ ३१ ॥
सुसंग्राह्याः प्रयत्नेन लक्षणेनाथ तान् विदुः ।
कान्तजे तु स्थिते तोये तैलबिन्दुर्न सर्पति ॥ ३२ ॥
खुरलोहे क्षिपेदुष्णं तोयं भवति शीतलम् ।
न च तापं समायाति तीव्रसूर्यकरातपात् ॥ ३३ ॥
नानाकाराश्म[?]संभूतं न मिलत्यायसे कदा ।
संलग्नं वेष्टते वाऽथ स्फुटत्यामीलितेन वा ॥ ३४ ॥
अथालिपक्षसदृशं तेजिष्ठं तु निरञ्जनम् ।
सर्ववर्णधरं ज्ञेयं नानावर्णसुतैजसम् ॥ ३५ ॥
खजं निरञ्जनं ख्यातं विभ्रमं वा स्ववर्णकम् ।
न चान्यत्सत्त्वे मिलति मिलिते भेदमाप्नुयात् ॥ ३६ ॥
कान्तायसमभेदि स्यात् सितवर्णं तु शुभ्रम[क]म् ।
असङ्गि [-चैव] सत्त्वेषु शैलजं सत्त्वभेदकम् ॥ ३७ ॥
चतुर्वर्णं समाख्यातं रक्तसस्यकसंभवम् ।
निरञ्जनं समाख्यातं मृदु स्निग्धं घनं भवेत् ॥ ३८ ॥

सुवर्णकान्तमाक्षीकं विमलादभ्र संभवेत् ।
सत्त्ववेधी[धि] समाख्यातं कठिनं कृच्छ्रभङ्गुरम् ॥ ३९ ॥
ज्ञात्वैवं रसलोहानि रसबन्धनं च कारयेत् ।
अग्निसोमार्कतीक्ष्णानि वङ्गं नागं षडायसाः ॥ ४० ॥
पीतं सितं तथा रक्तं कृष्णं श्यामं सितं विदुः ।
सर्वस्वे गरुडोद्गारपाषाणं हरित्पीतकम् ॥ ४१ ॥
निम्बकल्के विनिक्षिप्ते निम्बस्तु मधुरायते ।
भाजने रुधिरं कृत्वा विषं पिष्ट्वा विनिक्षिपेत् ॥ ४२ ॥
रुधिरं जलतां जाति[याति] परीक्षां तत्र कारयेत् ।
वारिणा गरुडोद्गारं घर्षयित्वा विनिक्षिपेत् ॥ ४३ ॥
तज्जलं स्वबलेनैव करोति रुधिरं पुनः ।
पद्मरागेण[न्द्र]नीलाख्यौ तथा मरकतोत्तमः ॥ ४४ ॥
पुष्परागः स वज्राख्यः पञ्च रत्नरसाः स्मृताः ।
रक्तः सितश्च हरितः पीतः श्वेत उदाहृताः ॥ ४५ ॥
गुरवो दीप्तिमन्तश्च सुवर्णक्षीररञ्जकाः ।
वज्रो न दह्यते वह्नौ योजयेद्रसबन्धने ॥ ४६ ॥
नृपावर्तकतुत्थं तु युक्त्वा विन्दु[द्रु]ममेव वा ।
यानि वैडम्बकाश्चै[श्चै]व रसास्तु मणिसंज्ञकाः ॥ ४७ ॥
महामणित्रयं चान्यत् क्षणात् सर्वजबन्धनम् ।
चन्द्रकान्तं शि[सि]तं ज्ञेयं तद्यामादम्बु मुञ्चति ॥ ४८ ॥
शुद्धाश्मसन्निभः ख्यातः सूर्यकान्तो विधीयते ।
तद्योगान्मुञ्चति ह्यग्निं तारकान्तश्च मुक्तवत् ॥ ४९ ॥
वज्रोपमोऽप्यवेधि स्यात् संग्रहाद्रसबन्धने ।
तथा वरं महारत्नं मृगनाभी[भि]सितं तथा ॥ ५० ॥
माठराम्बुजशूकं च तथा रक्षुरजं पयः ।
नि[नृ]शारं गौतमक्षारं तगरं नागसंज्ञितम् ॥ ५१ ॥

लेलीतकं स्रोतजं च कृष्णागरु स[सि]तं तथा ।
एते ज्ञात्वा गृहीतव्याः सूतकस्य निबन्धने ॥ ५२ ॥
महोदधिसमुद्भूतं सौगन्धिपिण्डमेव तु ।
हिमाचलसमीपस्थाः पूर्वदक्षिणभागतः ॥ ५३ ॥
चरन्ति कृष्णसाराश्च मृगास्तेषां च नाभिगः ।
औषधी रसपाकस्तु अतिसौगन्धिको मतः ॥ ५४ ॥
दत्त्वा करतले नो[ना]गो धूमस्त्वग्निस्थे सचले भवेत् ।
स्रोतांजनिहिते त्वक्ष्णोर्दिवा स्वर्क्षाणि पश्यति ॥ ५५ ॥
संततिक्रमदृष्टेन शेषा ज्ञेया यथार्थतः ।
उक्ताश्च वक्ष्यमाणाश्च पारम्पर्येण लोकतः ॥ ५६ ॥
सौवर्चलाच्च लवणाद्दाबाल्लो[ल्ले]लीतकः स्मृतः ।
कं नु अचले······जायते (?) भानुरश्मिभिः ॥ ५७ ॥
लवणाः षट् समाख्याताः सामुद्रं सैन्धवं विडम् ।
सौवर्चलं रोमकं च चुलिकालवणं तथा ॥ ५८ ॥
इष्टकादहने जातं पाण्डुरं लवणं लघु ।
तदुक्तं नवसाराख्यं चुलिकालवणं च तत् ॥ ५९ ॥
क्षारत्रयं समाख्यातं यवस्वर्जिकटङ्कणम् ।
विषानि[णि]पञ्च ख्यातानि शक्तुकं कृष्णशृङ्गिकम् ॥ ६० ॥
मुस्तकं वत्सनाभं च ज्ञेयानीति यथार्थतः ।
कन्दोत्पलनिभाकारं भिन्नं क्षरति शक्तुवत् ॥ ६१ ॥
घनं गुरु च निबिडं शृङ्गाकारं तु शृङ्गिकम् ।
मुस्तकं मुस्तकाकारं सितं पीतं तु जायते ॥ ६२ ॥
शुक्लं च वत्सनाभिं[भं] तु कपिलं वत्सनाभकम् ।
घनं रूक्षं च कठिनं भिन्नाञ्जनसमप्रभम् ॥ ६३ ॥
कन्दाकारं समाख्यातं कृष्णमेतन्महाविषम् ।
स्नुह्यर्ककरवीराश्च लाङ्गली विषमुष्टिकः ॥ ६४ ॥

एते ह्युपविषाः पञ्च तैलानि च शृणुष्व मे ।
ज्यौतिष्मतं र[न]क्तमालं रुबुकारुष्करे तथा ॥ ६५ ॥
अद्काङ्कोलजपालाशं वाकुचीतैलमेव च ।
अपामार्गजमुन्मत्तं रसकर्मणि योजयेत् ॥ ६६ ॥
जालूकमाण्डूकवसा मत्स्यकच्छपसंभवाः ।
कर्कटः शिशुमारश्च गोशूकरनरोद्भवाः ॥ ६७ ॥
खरोष्ट्राख्वजमेया[षा]श्च महिषस्य वसा तथा ।
मूत्राणि गजवाजीनां खरोष्ट्रमहिषेष्वपि ॥ ६८ ॥
गोऽजाविमद[नर]नारीणां बीजं पुष्पं नियोजयेत् ।
क्षाराः कदल्यपामार्गपालाशो मोक्षकस्तथा ॥ ६९ ॥
तिलवास्तुकवर्षाभूरेरण्डश्च तथैव च ।
निष्पावचणकक्षारौ निकुरः सुरदालिजः ॥ ७० ॥
रक्तमालोऽर्कोऽश्वमारः स्नुह्युन्मत्तश्च मुष्टिकः ।
कुटजोदुम्बरीक्षारो निक्षारः कारकस्तथा ॥ ७१ ॥
गो[गौ]तम[मो] गूथवृक्षश्च कञ्चुकी वज्रकन्दकः ।
तथा रक्षुरकः क्षारः कन्यसा[कनिष्ठा]मध्यमोत्तमाः ॥७२॥
एते वज्रोपमाः क्षाराः रसकर्मणि योजयेत् ।
मूत्रस्तु[न्तु] ताः सुशुष्कास्तु अथवा दधिवारिणा ॥ ७३ ॥
तत्क्षारवारिणा वाऽथ क्षारा वज्रोपमा मताः ।
यथालाभेन ते कार्याः पञ्चोर्ध्वं तु यथागमात् ॥ ७४ ॥
लवणक्षारसंयुक्ता यवशूकसमावराः ।
सितैस्तु संयुताः कार्याः कांक्षी कासीसगन्धकैः ॥ ७५ ॥
त्र्यूषणेन समायुक्ता मृदुना वह्निना पचेत् ।
तीव्रैर्भानुकरैर्वाऽथ शोषयेद्रससाधनम् ॥ ७६ ॥
द्रावकाः सर्वलोहानां मृदूनां जारकाश्च ते ।
सर्वजोदरसंस्थानां सर्वेषां जारकाः स्मृताः ॥ ७७ ॥

गर्भद्रुतिकरा ह्येते मर्दनात् स्वेदनात्क्षणात् ।
सर्वायासेन विधिवत् क्षारयोगं तु कारयेत् ॥ ७८ ॥
वेतसाम्लादिकाम्लैश्च संयुक्ता द्रवकायसे ।
उत्तमाः स्युश्च ते क्षारा अभ्रतीक्ष्णादियोजिताः ॥ ७९ ॥
सूर्यतापाग्नियोगाद्वा द्रावका नात्र संशयः ।
रसलोहास्तथा चान्ये रत्नानि मणयस्तथा ॥ ८० ॥
शङ्खमुक्तायसाः सर्वे रजसा ते द्रवन्ति हि ।
अम्लयुक्ता भवेयुस्ते तीव्राः शीघ्रद्रवास्तथा ॥ ८१ ॥
अन्यान्यम्लानि देवि त्वं शृणुष्वैकाग्रभावतः ।
बीजाम्लं दाडिमाम्लं तु[च] नारङ्गोद्भवमेव तु ॥ ८२ ॥
जम्बीराम्लं च भवति तिन्तिडीकोद्भवं च यत् ।
अम्लं च गैरिका चाम्लमम्लवल्लीसमुद्भवम् ॥ ८३ ॥
चणकाम्लं तु सर्वेषामेकमेव प्रशस्यते ।
अत्यम्लं वेतसं श्रेष्ठं सर्वेषामुत्तमोत्तमम् ॥ ८४ ॥
तेन युक्तास्तु ते क्षारा उत्तमा द्रावकाः क्षणात् ।
सर्वेषामेव चाम्लानामुत्तमश्चाम्लवेतसः ॥ ८५ ॥
रक्तपित्त[रक्तः पीत]स्तथा उष्णो[कृष्णो]
वर्णा ज्ञेयाः सितान्विताः ।
लाक्षारसं समञ्जिष्ठा रक्तचन्दनशिशपा ॥ ८६ ॥
अक्षकः खदिरश्चैव त्वसनश्च कुसुम्भजः ।
कुङ्कुमं द्विनाशा चैव तथा च मदयन्तिका ॥ ८७ ॥
किंशला शाकवृक्षस्य[श्च]तथा बिल्वकजो रसः ।
बन्धूककुसुमं चैव रक्तपुष्परसं ह्यसृक् ॥ ८८ ॥
दाडिमीकुसुमं चैव पालाशं कर्णिकारजम् ।
पारिभद्रजपापुष्पसेहालिककुसाम्मली[?] ॥ ८९ ॥
पीतपुष्परसं चैव कन्दमादित्यवल्लिजम् ।
मयूरमत्स्यपित्तानि चतुष्पदभवन्ति[वानि] च ॥ ९० ॥

यथालाभेन विधिवत् क्वथिते विनियोजयेत् ।
त्रिफलायसकल्कं तु तथा सहचरं रसम् ॥ ९१ ॥
महानीलस्तथा नीली काकाण्डीफलसंभवम् ।
तथा च वायसीकन्दं कन्दं नीलोत्पलस्य च ॥ ९२ ॥
सिरीषपत्रनिर्यासं निर्गुण्डीपत्रजं तथा ।
सिंहिकासंभवं पुष्पं सारं चैवासनोद्भवम् ॥ ९३ ॥
नीलपुष्परसं चैव सितकेशादिरञ्जने ।
स्नुह्यर्क इङ्गुदी गन्धा करवीरः पुनर्नवा ॥ ९४ ॥
वर्षाभूश्च सिता दूर्वा कञ्चुकी क्षीरिणी तथा ।
तथार्कपुष्पिका ख्याता शङ्खिनी शङ्खपुष्पिका ॥ ९५ ॥
चित्रको विषवाल्लूकी कुरजः क्षुद्रशङ्खिनी ।
चन्द्रवल्लीकदुर्गन्धो क्षीरिण्यो(?)यावदा[ता] भवेत् ॥९६॥
सितपुष्पा च औषध्यः शङ्खसु[शु]क्तिर्वराटिका ।
कर्पूरः शर्करा चैव शुक्लवर्ण[र्ग] उदाहृता ॥ ९७ ॥
बीजानां रञ्जने रक्तः पीतः कृष्ण उदाहृतः ।
रसस्य बन्धने ख्यातः स्नेहरागं नियोजयेत् ॥ ९८ ॥
रसोपरससंयुक्तं ताररागे नियोजयेत् ।
शुक्लानां चैव बीजानां शुक्लवर्गं नियोजयेत् ॥ ९९ ॥
तारकर्मसु सर्वेषु शुक्लशोधनकर्मणि ।
निषेकार्थे च संधानात् क्षीरं तत्राम्लयोगतः ॥१००॥
लवणक्षारसंयुक्तो वापसेकादिकर्मणि ।
एवं विधानतो ज्ञात्वा भूतितन्त्रं प्रसिद्ध्यति ॥१०१॥
शोधयित्वा तु विधिवद्रसांश्चोपरसायनान् ।
ततः कर्म तु कर्तव्यमन्यथा तु निरर्थकम् ॥१०२॥
यस्त्वशुद्धेषु चैतेषु कर्म कुर्यात् सुमोहितः ।
स हन्ति मुष्टिनाकाशं तुषान् कण्डूयते तु सः ॥१०३॥

जलमुल्लङ्घते मूढस्तृष्य[षा]र्त इति मे मतः[तम्]।
क्लेशैः संयुज्यते नित्यं द्रव्यहानिश्च जायते ॥१०४॥
लोकोपहास्यतां याति व्यसनेनाभिभूयते।
अत एव विधानेन शास्त्रोक्तं कारयेद्विधिम् ॥१०५॥

इत्याद्ये स्वच्छन्दे गोरक्षसंहितायां भूतिप्रकरणे
द्रव्यसंग्रहणाधिकारो नाम
द्वितीयः पटलः ॥ २ ॥



# तृतीयः पटलः

शक्तिरुवाच

यद्येवं चेदशुद्धैश्च रसोपरसकायसैः ।
न सिद्ध्यते भूतितन्त्रं तदा शुद्धिं वद प्रभो ॥ १ ॥
रागस्नेहादिसंयोगं साधनानि यथाचन(?) ।
चारणं जारणं चैव सर्वजस्य निबन्धनम् ॥ २ ॥
वद गुह्यं सुरेशान सर्वभूतहिते रत ।

श्रीकण्ठ उवाच

सूतकस्य विधिं वक्ष्ये स्वेदनानि यथास्थिति ॥ ३ ॥
स्वेदनं मर्दनं चैव मूर्च्छनोत्थापनो[ने] य[त]था ।
पातनं दीपनं चैव निरोधं च नियामकम् ॥ ४ ॥
चारणं गर्भसंद्रावं जारणं पातनं पुनः ।
ग्रासप्रमाणं विधिवद्रञ्जनं सारणं तथा ॥ ५ ॥
क्रामणं वेधयोगं च शरीरावापयोगतम् [योग्यताम्] ।
अष्टादशविधि[धं] कर्म विज्ञेयं सर्वजस्य तु ॥ ६ ॥
आदौ संग्राह्य सूतं तु मुहूर्ते शोभने दिने ।
शिवं संपूज्य विधिवत् पूजयित्वा तु दैशिकम् ॥ ७ ॥
भैरवं योगिनीचक्रं गणनाथं दिगीश्वरान् ।
वह्निं लोकाधिपान् क्षेत्रं गुरुं ब्राह्मणकन्यकाः ॥ ८ ॥
तत्रोपकरणादीनि पुष्पगन्धाक्षतैर्धनैः ।
बलिदानक्रियाभोज्यैर्दीनानाथजनानपि ॥ ९ ॥
तोषयित्वा प्रयत्नेन हृष्टः कर्म समाचरेत् ।
गृहधूमेष्टकोर्णाभिः वटुराजिककाञ्जिकैः ॥ १० ॥
मर्दयित्वा तलं प्रोक्ष्य(?) रसं यत्नात्तु साधकः ।
सोष्णेनैवारनालेन आयसे तापयेन्मनाक् ॥ ११ ॥

सुदृढे वा धरापात्रे राजिकार्कपयश्च ये ।
काकमाचीरसोन्मत्त[त्तैः] सप्तवाराणि मूर्च्छयेत् ॥ १२ ॥
विरेचनं रसस्योष्णं वङ्गनाग[गा]पहं भवेत् ।
संशोध्य पुनरुत्थानं रसायनविधौ तथा ॥ १३ ॥
पञ्चकौमारिकामध्ये एका श्रेष्ठा रसायने ।
कञ्चुकी गरुडा नीलगदा चेश्वरिशूकरी ॥ १४ ॥
नन्दिनी सूर्यवल्ली च रसकर्मणि योजयेत् ।
मूर्च्छने तु रसेन्द्रस्य सप्तवारान् पुनः पुनः ॥ १५ ॥
कर्कोटी ऊषनेत्रा च शुकतुण्डा च वायसी ।
जवा कुमारिका पञ्च पञ्चभिश्च जयेच्छिखिम् ॥ १६ ॥
स्वेदमर्दनमूर्च्छासु सर्वजोऽग्निसहो भवेत् ।
ऊषपत्राग्निजं वर्य्यं (?) वटमालाद्वयं हरेत् ॥ १७ ॥
वारुणा पञ्च आख्याताः सर्वजोऽग्निसहो भवेत् ।
ध्वाङ्क्षविड् द्विपदीपुष्पं नाबीजेन समन्वितम् ॥ १८ ॥
उक्ता नीरकणाद्यास्तु अम्बुजा हृष्टिसंयुताः ।
सृष्टियुक्ताः खजा वाऽथ भवजोऽग्निसहो भवेत् ॥ १९ ॥
अधोर्ध्वयन्त्रे विन्यस्य पातयित्वा नियोजयेत् ।
क्षाराम्ललवणक्षार आरनालेन संयुतम् ॥ २० ॥
दीपयेत्त्रीणि चाह्नि[चाहानि] तमाहारार्थं तु सूतकम् ।
सृष्ट्यम्बुजैर्यतोऽधस्तु अग्निना सूतकस्य तु ॥ २१ ॥
कर्कोटकञ्चुकीयोगाद्योजयेत्तु नितापने[निपातने] ।
तेजोवान्निर्मलः सूतः सप्तकञ्चुकवर्जितः ॥ २२ ॥
बालांशुमत्स्यदृग् दीप्तः संसृजेद्रश्मिमण्डलम् ।
सर्वकर्मसु योज्यस्तु ग्रासार्थी योजयेत्तदा ॥ २३ ॥
विधिमेनं समुत्सृज्य मूढधीः कुरुतेऽन्यथा ।
क्लेशेन युज्यतेऽत्यर्थं न रसो न रसायनम् ॥ २४ ॥

शुद्धिरष्टविधा ख्याता वक्ष्यमाणैर्निबन्धनम् ।
एकपत्रीकृतं व्योम क्षारवर्गे निधापयेत् ॥ २५ ॥
त्र्यूषणेन समायुक्तमहोरात्रेण बुद्धिमान् ।
तप्तं तु खादिराङ्गारैर्निपचेच्च पुनः पुनः ॥ २६ ॥
सप्तधा कारयेदेवमम्लवर्गेण भावयेत् ।
सुपिष्टं चक्रयोगेन पुनरम्लेन भावयेत् ॥ २७ ॥
एवं कृत्वा तु विधिवत्सर्वकर्मसु योजयेत् ।
ततो नीरकणातोयं सृष्टित्रयसमायुतम् ॥ २८ ॥
क्षारवर्गसमोपेतं तेन तन्मोदयेद् घनम् ।
पुरन्ध्रे गौरिरजसा तद्बीजेन भवन्तु तत् ॥ २९ ॥
जलजाद्यम्लसंयुक्तं बन्धनं याति सूतकः ।
रसग्रासान्तिका शुद्धिरन्यथा तु न किञ्चन ॥ ३० ॥
यस्यैवं तु समाख्यातं रहस्यं शुद्धिसंगतम् ।
चारणं शुद्धिसहितं स्वस्यैव तदुदाहृतम् ॥ ३१ ॥
गोतमा निचुलक्षारो रम्भा निक्षारकेतकी ।
सुरदाली समोक्षोऽग्निः सुदग्धाः क्षारपुङ्गवाः ॥ ३२ ॥
गजोष्ट्रहयमूत्रेण स्रावयित्वा तु शोधयेत् ।
गजपिप्पलितोयेन कुम्भितोयेन वा पुनः ॥ ३३ ॥
जलापामार्गतोयेन त्वजमारीभवेन वा ।
संयोज्य स्थापयेत् सोष्णे तीव्रसूर्यातपेऽथवा ॥ ३४ ॥
जायते नवनीताभं न कदाचिद्विशुद्ध्यति ।
वज्रनीलकणाद्यानि वेतसाम्लादि योजयेत् ॥ ३५ ॥
सतीक्ष्णद्रावणं श्रेष्ठं सूर्यतापाग्नियोजनात् ।
भूगतोष्मागतं चान्यद् द्रवेन्नैवात्र संशयः ॥ ३६ ॥
एकद्वित्रीणि सप्ताहात्ततोऽद्ध[र्द्ध]मव्यतिक्रमेत् ।
निक्षारकारकक्षारगौतमो रक्षुरस्तथा ॥ ३७ ॥

गजोष्ट्रहयमूत्रेण स्राव्यं संशोध्य यत्नतः ।
चूलिकालवणं दद्याच्चणकाम्लाम्लवेतसम् ॥ ३८ ॥
तत्रस्थं संद्रवेच्चाभ्रं मुक्ताविद्रुममेव च ।
राजावर्तकतुत्थानि रत्नानि मणयस्तथा ॥ ३९ ॥
तीक्ष्णवैक्रान्तकाद्यानि द्रावयेदग्नियोगतः ।
अशेषाणि अलेपानि नि[नी]रसे च रसायने ॥ ४० ॥
ज्ञात्वा संयोजयेद्धीमांस्तथा त्वम्लेन योगतः ।
अक्षमूलं त्रयोभस्म (?) कणाभस्मद्वयं च तत् ॥ ४१ ॥
गजोष्ट्रनरमूत्रेण गालयित्वा तु शोषयेत् ।
चूलिकां तत्र निक्षिप्य शोष्यमाणां तु बुद्धिमान् ॥ ४२ ॥
उरुभूतत्रा (?) तोयं दत्त्वा तत्र च निक्षिपेत् ।
अम्लवेतससंयुक्तं मर्दयित्वा समाहितः ॥ ४३ ॥
अम्लाद्या आ[-य]साः सर्वे (? रक्तयुक्ताः सविद्रुमाः ।
मणिग्रा[धा]तुरसाश्चैव शङ्खदन्तविडम्बकाः ॥ ४४ ॥
नृपावर्तकतुत्थानि चपलो विमलो द्विजः ।
सस्यकश्चैव माक्षीकरसको दरदोत्तमः ॥ ४५ ॥
गन्धकं तालकश्चैव शिलागौरी तथोत्तमा ।
अञ्जनं कान्तलोहं च कान्तं चैव सु[खु]रायसम् ॥ ४६ ॥
शुद्धा द्रवन्ति सर्वेषु गर्भग्रासे न संशयः ।
यच्चान्यपु[दु]द्रवं किञ्चिद् दुर्जरं रसयोजितम् ॥ ४७ ॥
मन्दाग्निना सूर्यकरैः सप्ताहाद् द्रावयेद् बुधः ।
वैक्रान्तकस्य कर्तव्या शुद्धिरग्निनियोजनात् ॥ ४८ ॥
स्नेहरागेण संसिच्य सप्तवाराणि सिद्ध्यति ।
क्षारस्नेहेन शैलं तु स्वर्णं च शुद्धिमाप्नुयात् ॥ ४९ ॥
क्षारस्नेहे स्ववर्गेण भावयेद्विमलं बुधः ।
पश्चाम्लेन समायुक्तं भाविते शुद्धिमाप्नुयात् ॥ ५० ॥

रसके चैव माक्षीके दरदे तु विधिस्त्वयम् ।
तथैवोपरसानां तु क्षारवर्गाम्लभावनात् ॥ ५१ ॥
स्वर्णस्नेहेन संयुक्तं कर्म ज्ञात्वा तु शोधयेत् ।
ऊर्ध्वमन्त्रेण पतिता अम्लस्नेहेन भाविताः ॥ ५२ ॥
विशेषाच्छुद्धिमायान्ति सर्वकर्मसु योजयेत् ।
अथ तीक्ष्णस्य वक्ष्यामि शोधनं तु यथा स्थितम् ॥ ५३ ॥
तीक्ष्णं तु यद्भवेत्तीक्ष्णं चूर्णयित्वा तु बुद्धिमान् ।
क्षारवर्गं यथालाभं मूत्रवर्गेण गालयेत् ॥ ५४ ॥
रक्तपीतकवर्गेण तत्क्षारं भावयेद् बुधः ।
पञ्च सप्तैव ये मुख्या यथालाभेन योजयेत् ॥ ५५ ॥
असनस्य च तोयेन क्वाथयित्वा यथावता ।
तेन पक्वं पुटे तीक्ष्णं सप्तवाराणि तत्त्वतः ॥ ५६ ॥
भावितं रक्तवर्गेण सर्वकर्मसु योजयेत् ।
शुलार[?]वङ्गनागस्य घोध[ष]मेह[हेम]सितस्य च ॥ ५७ ॥
अनेन विधिना कुर्याच्छोधनं सर्वकर्मसु ।
सितेन तारयोगे तु रसोपरसस्वायसाः ॥ ५८ ॥
अनेन विधिना शोध्यास्ततः कर्मसु योजयेत् ।
वज्रकान्ताभ्रशैलाख्यं माक्षिकं सस्यकं तथा ॥ ५९ ॥
तुस्य[त्थ]माहिष्यपञ्चाङ्गं क्षारक्षारयुतं भवेत् ।
पिण्डी तु सितरक्तेन वर्गेण तु समायुता ॥ ६० ॥
निध्वान्तं खदिराङ्गारैस्तीव्रवह्नौ निपातनम् ।
क्षारक्षारपटुर्योगं पिण्डीं कृत्वा खधातुषु ॥ ६१ ॥
सितपीतो[तं] यथा लाक्षं पतता सत्त्वमुत्तमम् ।
स्ववर्गे तु निषेक्तव्यं नागवङ्गे तु वाहितम् ॥ ६२ ॥
शुद्धं चैव खजं सत्त्वं रसबन्धे नियोजयेत् ।
माक्षिकादिरसा ये तु गुरवः कृच्छ्रभङ्गुराः ॥ ६३ ॥

रुबूकतैलमो (?) स्नेहमहिषाजाकि[वि]केष्वपि ।
क्षारयुक्ता भवेत् पिण्डी मूषायां तु पतेत् क्षणात् ॥ ६४ ॥
माक्षिकादिविधानज्ञो मूषाकोष्ठगतां परः ।
नागवङ्गेन सिद्धयन्ति[न्तीं] ज्ञात्वा कर्मनि[णि]योजयेत् ॥ ६५ ॥
रसायनविधाने तु नागवङ्गं नि[न] योजयेत् ।
हेमताराारताम्रैश्च संयुतास्तु रसायने ॥ ६६ ॥
वज्रायस्कान्तशैलाख्यसुरलोहाभ्रकायसैः ।
रसलोहैश्च विविधैर्योजयेच्च रसायने ॥ ६७ ॥
विमलादिरसानां तु यथाशुद्धिर्विशेषतः ।
क्षारः क्षारश्च लवणा रक्तक्वाथे नियोजयेत् ॥ ६८ ॥
रक्तानां चैव पीतानां कुसुमानां रसं क्षिपेत् ।
बृहत्पुष्पास्तु संग्राह्याः कर्णिकाराम्बुजादयः ॥ ६९ ॥
वन्ध्या कोशातकी चैव वज्रकन्दस्तु कञ्चुकी ।
वाष्पिका सुरदाली च चिञ्चिका कारवल्लिका ॥ ७० ॥
हलिनी च कणा चैव सूर्य्यावर्तं कुमारिका ।
प्रावृत्ति[त्ता] काकमाची च द्राविकास्ताः प्रकीर्तिताः ॥ ७१ ॥
एभिरेकतमैर्भाव्यं द्वित्रिपञ्च यथागमम् ।
रक्तपीतसितेनैव भावयेद् हेमकारकः ॥ ७२ ॥
श्वेतपुष्परसौषध्यस्तारकर्मणि योजयेत् ।
रसाश्चोपरसाश्चैव भाव्या शोष्या मुहुर्मुहुः ॥ ७३ ॥
रसाश्चोपरसाश्चैव आयसाः शुद्धिमाप्नुयुः ।
पटुक्षाराश्च ते सर्वे शुद्धा[ः] कर्मसु योजयेत् ॥ ७४ ॥
शिलाजतुरसो दिव्यः कृष्णो रक्तश्च पीतकः ।
रक्तवर्णेन संभाव्यस्त्वसृक्पित्तैश्च भावयेत् ॥ ७५ ॥
हेमकर्मणि योगः स्यात् स चोक्तस्तु रसायने ।
कुलत्थक्वाथतोयेन क्षारक्षारमयेन च ॥ ७६ ॥

वाष्पिका सुरदाली च चिञ्चिका कारवल्लिका ।
ग्राहृत्ता काच[क]माची च रसैरेभिर्नियोजयेत् ॥ ७७ ॥
रसोपरसधातूनि लोहचूर्णानि भावयेत् ।
शुद्धिमायान्ति विधिवद्धा[दृध्मा]ताः सत्त्वानि मुञ्चति॥७८॥
रसायनविधानेऽपि योगं नैव प्रयोजयेत् ।
क्षारैर्मूत्रैर्विषैरम्लैः पटुभिश्च विशोधयेत् ॥ ७९ ॥
रसोपरसधातूनि आयसानि विधानतः ।
रसायने विषादीनि वर्जयेच्च प्रयत्नतः ॥ ८० ॥
एवं संशोध्य विधिना ज्ञात्वा कर्मसु योजयेत् ।
रक्तपीतविधानेन यथायोगेन योजयेत् ॥ ८१ ॥
शिलाजतुशिलादीनि रसोपरसकायसाः ।
तारकर्मविधानेन सितैः शोध्या विधानतः ॥ ८२ ॥
शिलाभ्रवज्रशैलाख्या माक्षि[क्षी]कविमलौ (?) यतिः ।
पिण्डतालाञ्जनश्यामा काङ्क्षीकासीय[स]चिञ्चिकाः ॥ ८३ ॥
अन्या तु पुष्पकी[का]सीसा शिला चैव शिलाजतुः ।
तायया [तारयोगे] इमाः प्रोक्ता शुल्ववर्गेण संयुताः ॥ ८४ ॥
शुक्लबीजं तु कर्तव्यमेवं शृङ्खलिकात्रिभिः ।
यथालाभेन विधिवद्बीजं भवति शुक्लवत् ॥ ८५ ॥
काङ्क्षी तीक्ष्णायसं वङ्गं नागतारं तु अद्रिजम् ।
शुक्लस्य शोधने प्रोक्ता उक्तयोगसमायुताः ॥ ८६ ॥
क्षारक्षारपटुयुक्ताः सितसन्धानचेतनात् ।
सितत्वकारिकाः शुल्वे क्षेत्रीकरणकारकाः ॥ ८७ ॥
अल्पस्य तु रसस्यैते वेधयोग्या भवन्ति च ।
रसोपरसलोहैश्च नियुक्ता हेमकारिभिः ॥ ८८ ॥
शुक्लं वाऽथ सितं वाऽथ रक्तपित्तेन सेवितम् ।
रागस्नेहे भवेत् पीतं शृङ्खलात्रयनिर्गतम् ॥ ८९ ॥

हेमं वा कारयेद्वीजं हेमकारिमि[भी] रञ्जयेत् ।
रसोपरसलोहैश्च सितवर्गं तु वाहयेत् ॥ ९० ॥

रागस्नेहान्निषेक्तव्यं संस्कारे······ष्टिपणे ।
कृष्टिं वा योजयेद्धेम्नि तद्धेमरसरञ्जने ॥ ९१ ॥

यथा लाभेन लोकानां रसोपरससंयुतम् ।
लवणक्षाररागाद्यैः संयोगाद्वाऽपि सेचनात् ॥ ९२ ॥

सस्यकामा भवेत् कृष्टिः सा सितार्धा सितं भवेत् ।
बीजशोधनकालेषु द्वयोर्योज्या स्वकर्मसु ॥ ९३ ॥

सितैर्वाऽपि भवेत् कृष्टिः उत्तमत्वप्रसाधिनी ।
कनीयसं मध्यमं च षोडशांशेन उत्तमम् ॥ ९४ ॥

एवं शुद्धिः समाख्याता रसोपरसधातुषु ।
लोहानां चैव बीजस्य भूत्यर्थं रसबन्धने ॥ ९५ ॥

कर्तव्यं तु विधानेन शास्त्रोक्तं भूतिसाधने ।
अन्यथा न भवेत् सिद्धिर्विधिहीनस्य कुत्रचित् ॥ ९६ ॥

रसे रसायने चैव मन्त्रज्ञानेन सिद्ध्यति ।
तस्माज्ज्ञातो[च्छास्त्रो]क्त विधिना भूतिसिद्धिं च साधयेत् ॥९७॥

इत्याद्ये स्वच्छन्दे गोरक्षसंहितायां भूतिप्रकरणे
धातुशुद्धिर्नाम तृतीयः पटलः ॥ ३ ॥



# चतुर्थः पटलः

शक्तिरुवाच

महद्भूत्यायुषोऽर्थाय सर्वसिद्ध्यर्थहेतवे ।
यजने तु शिवस्यैव बन्धनं सर्वजस्य तु ॥ १ ॥
सरहस्यं महागुह्यं सोपगुह्यं वद प्रभो ।

श्रीकण्ठ उवाच

शृणु शक्ते महागुह्यं महाभूतिप्रदं शुभम् ॥ २ ॥
महदायुःप्रदं चैव रसबन्धं वदाम्यहम् ।
बन्धश्चतुर्विधः प्रोक्तो भूतिशास्त्रेषु भूतिदः ॥ ३ ॥
जरामृत्युहरश्चा[पि] यथाकर्म शृणुष्व तत् ।
द्रकलकं[?] गोलभस्म विज्ञाया[य] शास्त्रमध्यतः ॥ ४ ॥
कालाच्च करणाच्चैव चारणाज्जारणादिभिः ।
कालमंन्यासयोगेन महाबीजस्य योगतः ॥ ५ ॥
औषधीनां प्रभावाच्च क्षणाद्बध्येत सूतकः ।
तत्रादौ द्रवबन्धश्च प्रथमस्तु निगद्यते ॥ ६ ॥
सर्वजस्य उमायोनिसंसर्गो बन्धनं भवेत् ।
बीजानि च त्वनेकानि रसबन्धे नियोजयेत् ॥ ७ ॥
सर्वलोहरसं बीजं रसोपरससंयुतम् ।
लोहशङ्करबीजं तु तथायसरसे भवेत् ॥ ८ ॥
रसोपरसबीजं तु तथा लौहरसैः पृथक् ।
पृथक् पृथग् भवेद्बीजं लोहोपरससंयुतम् ॥ ९ ॥
खसत्त्वं हेमबीजं तु बीजं सितखगेन तु ।
तेषां यथाक्रमं मि (?) भ्रान्तिनिर्नाशनं परम् ॥ १० ॥
रसलोहाश्च ये केचिद्बीजं पीतं सितं तथा ।
सुरायस्कान्तवज्राख्यकान्त्याभ्रजरसायने ॥ ११ ॥

नानाधातुभवं चैकं हेम्नि वासं त्रिशृङ्खलाः ।
रक्तस्नेहे निषेकेन रसबीजमुदाहृतम् ॥ १२ ॥
रसोपरससंयुक्तं द्वितयं तु महद्गुणम् ।
रसलोहैश्च संयुक्तं हेमशं[सं]करमुत्तमम् ॥ १३ ॥

रसोपरससंयुक्तमतिव्यूढमहोदयम् ।
षडायसाभ्रम[स]त्त्वं च लोहश[स]ङ्करमुत्तमम् ॥ १४ ॥

रसोपरससंयुक्तं सांयोगिकमहोदयम् ।
षट्लोहाभ्रहेमस्थ(?)मुक्तायसरसं महत् ॥ १५ ॥

रसोपरसलोहानि हेम्नि क्षीणानि शोभनम् ।
रसाश्चोपरसा हेम्नि खजयुक्तं महोदयम् ॥ १६ ॥

खजहेमावशेषं तु बीजं तु रसबन्धने ।
महाभ्रतीक्ष्णमाक्षीकं हेमाभ्रशुल्वमाक्षिकम् ॥ १७ ॥

हेमाभो[भ्रो]रु[र]गमाक्षीकं हेमाभ्रं वङ्गमाक्षिकम् ।
एतानेव तु संयोज्य हेमाभ्रो[भ्रात्]त्रिगुणं क्षिपेत् ॥ १८ ॥

विमले रसकेऽप्येवं वापनात् सत्त्वयोगतः ।
सस्यकेशरहैमे वा वैक्रान्त्यादि उदाहृतम् ॥ १९ ॥

दरदोपरसैः सर्वे हेमाभ्रजयुतं भवेत् ।
खसत्त्वहेमसंयोगात् खसत्त्वासितयोगतः ॥ २० ॥

शिलाजतुयुतं बीजं त्रिगुणेन समीकृतम् ।
निर्व्यूढं रसबन्धे तु शोभनं तदुदाहृतम् ॥ २१ ॥

स्वमृत्युनिहिताः कार्या आयसा बीजयोजने ।
माक्षिकेण मृतं हेम हेम्नि तु तृणं क्षिपेत् ॥ २२ ॥

बीजमेतन्महागुणं प्रोक्तं रसनिबन्धने ।
माक्षिकेण मृतं हेम हेमोत्कर्षकरं भवेत् ॥ २३ ॥

मध्वाज्यरसतैलेन रक्तस्नेहेन संयुतम् ।
दशांशपत्रलो[ले]पेन षोडशेन तु बन्धयेत् ॥ २४ ॥

माचिकेण मृतं तारं मध्वाज्येन पुनर्भवेत् ।
त्रिरुस्यामा[त्थाना]द्भवेत्पीतं द्वादशार्धार्धं योजयेत् ॥ २५ ॥

द्विवर्णपतितं ज्ञेयं तापिजेन खजं हरेत् ।
त्रीन् वारांश्च भवेत्पीतं रसबीजमुदाहृतम् ॥ २६ ॥

तदर्कपीतसारं च हेमार्धेन तु शोभनम् ।
द्विवर्णपतितं ज्ञेयं बीजसाधनकर्मणि ॥ २७ ॥

माक्षिकेण मृतं नागं विज्ञेयं रसबन्धनम् ।
सोमार्कत्रिगुणं व्यूढं पृथग्रसेन सेवितम् ॥ २८ ॥

पीतं तत्संयुतं हेम्नि द्विवर्णपतितं भवेत् ।
माक्षिकेण हतं वङ्गं तद्बीजं रसबन्धनम् ॥ २९ ॥

तत्खजे त्रिगुणं······हेमार्धोक्तगुणं भवेत् ।
माक्षिकेण मृतं तीक्ष्णं तद्बीजरसबन्धनम् ॥ ३० ॥

हेम्नि तु त्रिगुणं व्यूढं तदुक्तार्धकरं भवेत् ।
षोडशांशेन बद्धव्यं व्यक्तस्नेहे निषेवितम् ॥ ३१ ॥

तद्धेम सारणे श्रेष्ठं मृतनागेन वाहितम् ।
तारेण तु शुभं हेम विज्ञेयं रसबन्धनम् ॥ ३२ ॥

गन्धकेन हतं शुल्बं चारणाद्रसबन्धनम् ।
हेम तेन त्रिधा व्यूढं बीजं चारणसारणे ॥ ३३ ॥

दरदेन हतं तीक्ष्णमुक्तकर्मफलोदयम् ।
चारणाद्बन्धयेत् सूतं त्रिधा हेम्नि नियोजितम् ॥ ३४ ॥

बीजं तु सम्भवेच्छ्रेष्ठं वारणे जारणेषु वा ।
षोडशांशेन उत्कर्षं रक्तवर्गे निषेचयेत् ॥ ३५ ॥

नागं शिलाहतं कार्यं तत्सूतस्य निबन्धने ।
हेम्ना तत्त्रिगुणं व्यूढं चारणे सारणे हितम् ॥ ३६ ॥
हेमोत्कर्षमिदं प्रोक्तं षोडशांशेन शोभनम् ।
गोदन्ततलकेनैव वङ्गं निघातयेद् बुधः ॥ ३७ ॥

चारणाद्बन्धयेत् सूतं त्रिधा हेम्नि तु वाहितम् ।
चारणात्सारणात्सूते[तो] बन्धमायाति सर्वजः ॥ ३८ ॥
सृष्टित्रयाम्बुयोगेन द्रवं तेषां नियोजयेत् ।
रक्तस्नेहेन संयुक्तं वाहनं कारयेद् बुधः ॥ ३९ ॥
मृतैरेभिः समायोगाद् वेतसाम्लादियोजितैः ।
चारणाज्जारणात् सूतो बन्धमायाति सत्वरम् ॥ ४० ॥
त्रिंशत्कलाः क्षिपेद्धेम रागस्नेहनिषेवणात् ।
बीजमेतद्भवेच्छ्रेष्ठं चारणात् सारणान्तिकम् ॥ ४१ ॥
सुमृत्युनिहितं सोऽहं माक्षिकं मलपातितम् ।
रसलोहे तु संयोगात् स्नेहरागाम्लभावितम् ॥ ४२ ॥
त्रिगुणं वाहयेद्बीजे तच्चूर्णं चारयेद्रसे ।
चारणा सारणा कार्या निर्व्यूढेन रसस्य तु ॥ ४३ ॥
बध्यते सर्वजोऽनेन हेमतारकरः शुभः ।
रसलोहैर्विना कर्म विषोपविषयोजितम् ॥ ४४ ॥
यथालाभेन कर्तव्यं रागस्नेहाम्लयोजितम् ।
क्षारवर्गेषु सर्वेषु योजयेद्रससाधने ॥ ४५ ॥

रसायनादिकर्माणि लोहा योज्या विषैर्विना ।
एवं बीजानि साध्यानि सूतकस्य निबन्धने ॥ ४६ ॥
चारणा जारणा कार्या सारणान्तो भवेद्रसः ।
समेन कलवेधी स्याद् द्विगुणे द्विगुणे[णो] भवेत् ॥ ४७ ॥

चतुर्गुणे च संचीर्णश्चतुःषष्टिप्रबन्धकः ।
अथ षड्गुणसंचीर्णः शतवेधी भवेद्रसः ॥ ४८ ॥

सहस्रेणाष्टसंख्यातो लक्षणेन[क्षेण] दशधा कृतः ।
अथ षोडशसंचीर्णः कोटिवेधी भवेद्रसः ॥ ४९ ॥

त्रिंश[त्रयस्] त्रिंशदथ षट्त्रिंशत् संख्या चरेद्यथा ।
तदा विध्यन्ति लोहानि स्पर्शधूमावलोकतः ॥ ५० ॥

जरामृत्युरुजहरो दीर्घायुष्यप्रदायकः ।
खेचराद्यणिमावाप्तिर्जायते नात्र संशयः ॥ ५१ ॥

रागस्नेहेन बीजेन सारणात्तु समा भवेत् ।
दीर्घमूषोदरे कार्या द्विगुणत्वे तु सारणा ॥ ५२ ॥

प्रतिसारणसस्योक्ता(?) त्रिगुणा चाग्नियोगतः ।
रुबूकारुस्तु[ष्क]रस्नेहरसतैलेन संयुतम् ॥ ५३ ॥

यथालाभोक्ततैलानामेवं संशोष्य बुद्धिमान् ।
तोये चाष्टगुणे क्वाथ्यं रक्तवर्गे तु निक्षिपेत् ॥ ५४ ॥

तत्क्वाथ्य स्नेहशेषं तु विषोपविषसंयुतम् ।
शिखिपत्रकचान्द्याद्द् ध्वाङ्क्षविष्ठादियोजितम् ॥ ५५ ॥

सृष्टियुक्तं सुधाद्रव्यं क्षाराक्षारपटूयुतम् ।
रसोपरसप्रक्षिप्तं भवजस्य नियामनम् ॥ ५६ ॥

सर्वेषां चैव बीजानां यो नियन्तुं नियोजयेत् ।
खजसत्त्वं सूतकस्य बन्धनं समुदाहृतम् ॥ ५७ ॥

तस्यैव पातनं श्रेष्ठं क्षारमूत्रपटूनि च ।
क्षारैस्तु संयुता पिण्डी द्राविकौषधिभाविता ॥ ५८ ॥

मूषायां निपतेत् सत्त्वं यदि मूषा च क्लिद्यति ।
कोष्ठेऽर्धे संपतेत् सत्त्वं सर्वाङ्गमभ्रकस्य तु ॥ ५९ ॥

अभ्रकस्य नलं चैव कीटं चैव तु जायते ।
सर्वं भवति सत्त्वं च नैपुण्यान्नात्र संशयः ॥ ६० ॥

निम्बक्वाथं [च] सामुद्रं सैन्धवं टङ्कणं पुटम् ।
गुडेन सहिता पिण्डी अभ्रसत्त्वनिपातिनी ॥ ६१ ॥

सर्वेषां चैव धातूनां वज्रादीनां निपातिनी ।
शरन्माससमुद्भूता भूनागा गुडमिश्रिता ॥ ६२ ॥

क्षौद्रटङ्कणसंयुक्ता कदलीकन्दमर्दिता ।
सूरणेन समोपेता विशोष्य गुटिका कृता ॥ ६३ ॥

धाम्यमाना भृशं किट्टमध्ये सत्त्वं प्रगृह्यते ।
शरत्कालभवा ग्राह्या भूनागानां तु मृत्तिका ॥ ६४ ॥

धौता जले तथा ग्राह्या यथाधस्तात् सुतिष्ठति ।
तां नागमृत्तिकां नीत्वा माहिषं पञ्चकं समम् ॥ ६५ ॥

तथा मधुगुडं दत्त्वा ध्माते सत्त्वं समुद्धरेत् ।
एवं मयूरपित्तेन पक्षे वाऽपि भवेद्रविः ॥ ६६ ॥

समस्तविषनाशार्थं मुद्रां कृत्वा विधारयेत् ।
पुरः सर्जगुडोर्णा च जतुमत्स्या सधातुका ॥ ६७ ॥

अजायाः पयसा भाव्या पिण्डी सत्त्वनिपातिनी ।
वज्रायस्कान्तशैलानां सस्यकस्य निपातिनी ॥ ६८ ॥

मृत्तिकोपलधातूनां पातिनी बन्धने भवेत् ।
क्षारसिन्धुः ससामुद्रा गुडाज्यमधुसंयुता ॥ ६९ ॥

एषा वज्रोपमा पिण्डी सर्वसत्त्वविरेचनी ।
शणवल्कलबीजानि कुलत्था वज्रकन्दकः ॥ ७० ॥

वज्राहताशमान्दश्च खरजे पञ्चमाशतः ।
रसं पाषाणभेदिन्या दीर्घपत्रा तु या भवेत् ॥ ७१ ॥

श्रीहस्तिनी तु सा प्रोक्ता स्ववर्णाक्षरयोगतः ।
पातयेत्तत्तत्सत्त्वमभ्रादीनां विरेचिनी ॥ ७२ ॥

स्वर्जिटङ्कणवैडम्वं जतुसर्जरसं तथा ।
माहिषेण समायुक्तं कृत्वाक्षवट्टकां बुधः ॥ ७३ ॥

शोषयित्वा च सत्त्वं च ध्मातं पतति धातुषु ।
बोलटङ्कणसिन्धूत्थं मरिचं नखमेव च ॥ ७४ ॥

स्वर्जिका च तथा पथ्या शिग्रुमूलरसेन तु ।
पिण्डीत्येषां तु सर्वेषां सत्त्वानां च निपातिनी ॥ ७५ ॥

तण्डुलाः कोरदूषस्य मदना वज्रकन्दकः ।
सुपर्ष्टिं[सुपिष्टं] कारयित्वा च मत्स्याजदोपा(?) यसाम् ॥ ७६ ॥

खरजेन युतं सिद्धं सर्वधातुविरेचनम् ।
आदिद्रव्ययुतं सस्यं खाने पाने नियोजयेत् ॥ ७७ ॥

विरेचनं तु बीजस्य सर्वभूतेषु जायते ।
निम्नगानां तडागानां दूषकः प्राणहारकः ॥ ७८ ॥

अजादुग्धेन लिप्तव्यं पिष्ट्वालोड्याभ्रसंयुताः ।
टङ्कणेन समायुक्तं वटकीकृत्य शोषितम् ॥ ७९ ॥

ध्मातं हि निपतेत् सत्त्वमभ्रादिना[दीनां] न संशयः ।
महिषीपीयु(यू)षं गुञ्जा उमाफलपटूनि च ॥ ८० ॥

मत्स्या गडोर्णा सर्जश्च लाक्षा क्षारत्रयं तथा ।
अजादुग्धेन पिण्डी तु सर्वसत्त्वनिपातिनी ॥ ८१ ॥

यदात्तमग्निवैकस्यात्सक्व[त्त्वं] ध्मातं न मुञ्चति ।
तदा तेनैव विधिना द्वित्रिरेवं पतेद् ध्रुवम् ॥ ८२ ॥

तुषधान्यस्य दग्धा तु मृत्तिकार्धं नियोजितम् ।
कोष्ठकं हस्तमात्रं तु गर्भे च षोडशाङ्गुलम् ॥ ८३ ॥

वितस्तिमात्रमूर्ध्वं तु अधश्चाष्टाङ्गुलो भवेत् ।
अधोरन्ध्रसमायुक्तमुभयोर्वाऽथ कारयेत् ॥ ८४ ॥

जालकं नवरन्ध्रं तु अर्धछिद्राणि पार्श्वतः ।
दशाङ्गुलं तु कर्तव्यं कटाहमङ्गुलं भवेत् ॥ ८५ ॥

वक्रनालस्तु कर्तव्यस्त्वष्टाङ्गुलकमानतः ।
ज्येष्ठरन्ध्रप्रमाणं तु हस्तमात्रा भुजा भवेत् ॥ ८६ ॥

अघटं कारयेत् पश्चाद्भस्त्राग्रेषु निवेशयेत् ।
छठं[घटं] रज्जुनिबद्धं तु धाम्येह तु यथावतः(?) ॥ ८७ ॥

तथान्या रन्ध्रभस्त्राया नलिका आसनी भवेत् ।
अष्टाङ्गुलसमाख्याता रन्ध्रा ज्येष्ठप्रमाणतः ॥ ८८ ॥

कोष्ठकस्यैव यद्रन्ध्रं नलिकामुखमानतः ।
द्विरङ्गुला प्रतिष्ठा तु भस्त्रैव चतुरङ्गुला ॥ ८९ ॥

प्रतिष्ठा तु दृढा बद्धा भाराक्रान्तं तु कारयेत् ।
कराधारेण संयुक्तमुत्क्षेपोत्क्षेपणो भवेत् ॥ ९० ॥

सदृशो हस्तमात्रस्तु मृदुर्मुखसुसंमितः ।
तथान्या कठिना कार्या दण्डकौ यस्य वर्तुलौ ॥ ९१ ॥

चतुरभं[स्रं] मुखं कार्यं वेधकीलसुसंचितम् ।
पृष्ठद्वयस्य संयोगमावक्रग्रहमोचनम् ॥ ९२ ॥

तुषाधान्यस्य दग्धास्तु कूर्पं च सिकता तथा ।
लोहकीटं तथा गोऽस्थि शर्करा कृष्णमृत्तिका ॥ ९३ ॥

नाम्ना कुलिशतुत्थेयं धाम्यमाना न नश्यति ।
संवृता गोस्तनाकारा मल्लिकाकारये[मेव] सा ॥ ९४ ॥

सारणा गोस्तनाकारा मेलकावर्त्तसंवृता ।
मल्लिकाकृतिनिर्वाहे कालस्य तु अर्ध तः(?) ॥ ९५ ॥

निविडा घनाधस्तात्तु अङ्गारा जालकोपरि ।
पुनर्धातुस्तथाभ्रं वाभ्यङ्गाराश्च तरस्तरम् ॥ ९६ ॥

वक्रनालमुखं मध्ये अङ्गाराङ्गुलमध्यतः ।
अधो ध्मातेन संदीप्य पावकम[म]स्त्रमन्त्रितम् ॥ ९७ ॥

मुद्रां तु ज्वालिनीं बद्ध्वा दिशश्चास्त्रेण त(?) जयेत् ।
नमस्कृत्य···घोरं च उद्दिश्य मखहेतुतः ॥ ९८ ॥

सर्वभूतहितार्थाय नात्मार्थाय कदाचन ।
धातूनां श्र[द्रा]वणं कार्यं रसबन्धं तु सूरिभिः ॥ ९९ ॥

राज्यार्थं तु नृपैः कार्यं यागं भूतहितैषिणः[भिः] ।
व[भ]स्त्रानालेन तीव्रेण महाज्वालो[ले] हुताशनः[ने] ॥ १०० ॥

अतिदीप्ता भवेच्छुद्धं स्वाङ्गाराः क्षयमागताः ।
पुनरन्यान् ददेन्मूर्ध्नि द्विस्त्रिर्वाराणि बुद्धिमान् ॥ १०१ ॥

यथा दीप्तो भवेद्वह्निः शुद्धज्वालो महारवः ।
पतितं तु तदा विद्यात्तत्सर्वं नात्र संशयः ॥ १०२ ॥

पतितं तु पृथक् कार्यं किट्टाङ्गारविवर्जितम् ।
निपुणं लक्षयित्वा तु पुनर्धाम्यो यथावतः(?) ॥ १०३ ॥

द्वित्रिवारमशेषं तु ध्मातः सत्त्वं विमुञ्चति ।
संगृह्य विधिवत्सर्वं पुनरावृत्य एकतः ॥ १०४ ॥

वंशेन ज्वाल्य विधिवद्वाष्पसेकानि कारयेत् ।
पटुक्षारेण वापं तु संदंशं लोहशुक्लिगम् ॥ १०५ ॥

उन्मीलति यदा सत्त्वं दृश्यते मलवर्जितम् ।
तदा वापं तु कर्तव्यं द्रुते मलसमन्विते ॥ १०६ ॥

पुनराज्वाल्य वंशेन स्नेहादिषु निषेचयेत् ।
मधुपुष्पयुतं [ क्वा ]थं विदारीकन्दजं रसम् ॥ १०७ ॥

कदली वनजा वन्ध्या गुडूचीकन्दजं रसम् ।
पायसं चैव मीनानामजापयसि सन्धितम् ॥ १०८ ॥

रुबूकस्नेहसेकेन मृदुरेकैककारकम् ।
द्वित्रिपञ्च तथा सप्त पांशुभूतं यदा भवेत् ॥ १०९ ॥

कठिनं वा तदा रूक्षं दुर्भेद्यमचलं च यत् ।
अभ्रमं मलसंकीर्णं वाष्पसेकान्मृदुर्भवेत् ॥ ११० ॥

प्रच्छादनं भवेद्वायोर्निषेको मात्रमब्जशः (?) ।
तैलेन च निषेक्तव्यं तप्ते तप्ते निषेचयेत् ॥ १११ ॥

अथाभिषेकमूषस्थक्षारस्नेहे च कारयेत् ।
मृदुर्भवति सत्त्वं च शुद्धं चैव च निर्मलम् ॥ ११२ ॥

पीते पीता भवेज्ज्वाला सिते चैव सिता भवेत् ।
सस्यके तु भवेद्रक्ता वज्रे नानावि[-धा] भवेत् ॥ ११३ ॥

अरविन्दे शुकाभासा श्यामा चैव भुजङ्गमे ।
पारसे चैव धूम्रा तु कृष्णा भवति चायसे ॥ ११४ ॥

शरदभ्रनिभा शैले कान्ते धूम्ना[मेन] च संनिभा ।
देवलोकस्य कपिला खस्य शुभ्रा विधीयते ॥ ११५ ॥

शुभ्रा तु रसलोहानां ज्ञातव्या तत्त्वतो बुधैः ।
ज्ञात्वा सम्यग्विधानेन त्वग्निकर्म च बुद्धिमान् ॥ ११६ ॥

शास्त्रार्थात् कर्मनिपुणो रसकर्मारभेत्तु [तत्] ।
एकान्ते च सुगुप्ते च लोकसंगतिवर्जिते ॥ ११७ ॥

संबद्धं वा विनिर्मुक्ते कारयेद्रसमण्डपम् ।
सर्वोपस्करणैर्युक्तो[र्युक्तं] गजशालोपमं महत् ॥ ११८ ॥

भित्तिजालकसंयुक्तमूर्ध्वधूमनिकासकम् ।
द्वारार्गलकपाटं तु महत्प्राकारपार्श्वगम् ॥ ११९ ॥

अथ शास्त्रस्य ऐशान्यां लेपकर्म तु कारयेत् ।
आग्नेय्यां वाऽथ कर्तव्यं तस्य चै[-व] हि दृष्टिगम् ॥ १२० ॥

सर्वोपस्करसंयुक्तं सुगुप्तेन स्थिते पटे ।
रसोपरसलोहानि औषध्यस्तत्र सन्नयेत् ॥ १२१ ॥

वर्षाङ्गारं तुषा चैव अरण्योपलकानि च ।
खलाश्म तु निरुग[द्गा]रि द्विरङ्गुलकटाहकम् ॥ १२२ ॥

अष्टाङ्गुलो वटः कार्यो दीर्घो वा वर्तुलोऽपि वा ।
द्वादशाङ्गुलदैर्घ्येण मर्दकश्चतुरङ्गुलः ॥ १२३ ॥

मुखं वृत्तं प्रकर्त्तव्यं दर्पणोदरसंनिभम् ।
पेषणी च निरुद्गारा तथान्या च यथा तथा ॥ १२४ ॥

मृत्तिकापेषणी सा तु मुशलोलूखलस्तथा ।
अश्मजा चैव कर्तव्यायसोलूखलिका तथा ॥ १२५ ॥

लोहमुष्टिस्तथा चान्या दृढो लोहकटोरकः ।
अयस्कान्तोद्भवः श्रेष्ठो रसकर्मणि शस्यते ॥ १२६ ॥

आयसो मर्दकाश्चय न श्चाहिरणी (?) तथा ।
संदंशः कर्तरी चैव चूर्णकश्चैव शोभनः ॥ १२७ ॥

तूलिका च प्रमाणानि धा[ध] रापात्रश्च[श्च] वै दृढः [ढम्] ।
भाण्डानि च दृढान्येव ताम्रकांस्यभवानि च ॥ १२८ ॥

वङ्गनागकृतान्येव तथायसमयाः शुभाः ।
सहायाः कुशलाः कार्या अग्निकर्मविशारदाः ॥ १२९ ॥

क्लेशायाससहाः शूरा दयादाक्षिण्यसंयुताः ।
सत्यवाचो धर्मशीला नयानयविशारदाः ॥ १३० ॥

शिवभक्ता महोत्साहा लोभमोहविवर्जिताः ।
नैव भेदं प्रकुर्वन्ति प्राणैः कण्ठगतैरपि ॥ १३१ ॥

अन्येऽपि दैशिकाः श्रेष्ठा रसतन्त्रस्य पारगाः ।
मेधाविनः सुकर्मज्ञाः संयुक्तस्तैस्तु बुद्धिमान् ॥ १३२ ॥

कारयेद्रसबन्धं तु अथ कारयति ध्रुवम् ।
सिद्ध्येत भूमितन्त्रं तु द्रव्यमायुश्च साधयेत् ॥ १३३ ॥

अन्येऽपि वार्तिकाः केचिच्छास्त्रार्थज्ञानसंयुताः ।
शास्त्रोपदेशसहिता दारिद्र्यव्यसनाकुलाः ॥ १३४ ॥

भ्रमन्ति पृथिवीं सर्वां यत्र त ईश्वरा जनाः ।
स्थापयति स्वकर्माणि सिद्धोऽहं वार्तिकोत्तमः ॥ १३५ ॥

मम द्रव्यं प्रयच्छन्ति येन ते रसबन्धनम् ।
करोति हेमवेश्मानि जरामृत्युविनाशनम् ॥ १३६ ॥

परीक्षा तस्य कर्तव्या शास्त्रकर्मोपदेशतः ।
शास्त्रेण ज्ञायते कर्म उपदेशेन तत्त्वतः ॥ १३७ ॥

कदाचिच्छास्त्ररहितो दृष्टकर्मा विधीयते ।
प्राप्तोपदेशस्त्वथवा तच्च शास्त्रेण लक्षयेत् ॥ १३८ ॥

न शास्त्र[-र]हितं किञ्चित्कर्म चाशी[स्ती]ति कुत्रचित् ।
यदा संवत्ति[संवृति] जनेन (?) तदा तेनैव कारयेत् ॥ १३९ ॥

कुशलैश्चैव चाध्यक्षैर्यथा द्रव्यं न हीयते ।
कर्मा[र्म]ण्यसिद्धे तस्यैव कार्यो नैव च निग्रहः ॥ १४० ॥

न च दुर्भावेण किञ्च ज्ञात्वा तु पुनरागमम् ।
एवं कुर्यात् कर्म ह्येतदनवस्था तु चान्यथा ॥ १४१ ॥

सर्वेषां मन्त्रतन्त्राणां क्रम एव[ष] उदाहृतः ।
यदा निग्रहति क्रुद्धस्त्वथवा ते विवर्जयेत् ॥ १४२ ॥

अन्योऽपि कश्चिन्न भवेन्मन्त्रतन्त्रे रसे तथा ।
प्रकाशको दायकश्च क्रोधोपहतचेतनः ॥ १४३ ॥

तृप्त्या तु रसबन्धेन ईर्ष्यामन्त्रप्रसाधने ।
यस्य संवृतिर्नैवास्ति न रसो मन्त्रसाधनम् ॥ १४४ ॥

अस्ति चैवं विधिस्त्वेवं रसमन्त्रस्य साधने ।
द्रव्यं शिवोपयोगि स्यात् सूतकस्य निबन्धने ॥ १४५ ॥

अक्षयं भवते तत्तु सिद्धं वा यदि नैव तत् ।
चाटुचारणवैश्यानां द्यूतमद्यार्थनाशनम् ॥ १४६ ॥

स्वर्गापवर्गरहितं निष्फलं मूढचेष्टितम् ।
तडागारामकूपानां वापीपुष्करिणीषु च ॥ १४७ ॥

प्रसाददानसंशक्तिः सामान्यं तद्विचेष्टितम् ।
अदृष्टफलयोगोऽयं किल तत्सर्गसाधनम् ॥ १४८ ॥

शिवस्य यजनार्थाय सूतकस्य निबन्धने ।
सिद्धिभुक्तिप्रदं द्रव्यं कदाचिन्नैव सिद्धिभाक् ॥ १४९ ॥

अक्षयं शिवलोके तु भाग्यं भवति निश्चितम् ।
एवं ज्ञात्वा च विधिवन्निश्चितात्मा सुभावितः ॥ १५० ॥

अहन्यहनि योगेन रसमन्त्रप्रसाधने ।
कर्तव्यो निश्चयो नित्यं महाभूतिं नियच्छति ॥ १५१ ॥

महाकल्पायुषं चैव सिद्धिं मुक्तिं च शाश्वतीम् ॥ १५२ ॥

इत्याद्ये स्वच्छन्दे गोरक्षसंहितायां भूतिप्रकरणे जीवोत्सर्ग-
विधानश्चतुर्थः पटलः ॥ ४ ॥



# पञ्चमः पटलः

शक्तिरुवाच

श[स]र्वजस्य उमायोनिबन्धनं तु त्वयोदितम् ।
केनोपायेन तद्योनौ संविशेत् संस्कृतो रसः ॥ १ ॥
तानि योगानि विधिवदौषध्यश्च महाबलाः ।
यानि योगरहस्यं तु [स्यानि] यच्चान्यद्वद मे प्रभो ॥ २ ॥

श्रीकण्ठ उवाच

शृणु शक्ते यथा योगं याति सर्वजसंगमम् ।
अभ्रचूर्णेन संचूर्णो भवजो बलवान् भवेत् ॥ ३ ॥
तद्योगेन महायोगाः सन्धानानि च वाल[स]ताः ।
सुमुखा निर्मुखाश्चैव औषध्यश्च महाबलाः ॥ ४ ॥
संस्कारः पूर्वविधिना सर्वजमभ्रकं तथा ।
भस्मक्षारान् सुशुष्कांस्तु क्षारांश्च लवणानि च ॥ ५ ॥
आद्धाल्य [आलोड्य] चाम्लवर्गेण शुल्बभाण्डे निधापयेत् ।
यावच्च शुकपिच्छाभमभ्रकं तेन भावयेत् ॥ ६ ॥
ग्रसते तत्क्षणात् सूतो गोलकस्तु विधीयते ।
खेचराङ्गं तथा ऊर्ध्वं गन्धकाम्लं नियोजयेत् ॥ ७ ॥
चणकाम्लो [म्लं] वेतसो[सं] वा योजयित्वा च बुद्धिमान् ।
निक्षेपा[क्षिपे]त्ताम्रपात्रे तु यावन्मरकतोपमम्॥ ८ ॥
खचूर्णं भावयेत्तेन सूतको ग्रसते क्षणात् ।
अम्लवर्गं कृतं कांस्ये ताम्रे नागेऽथवायसे ॥ ९ ॥
कांक्षीकासीससिन्धूत्थं संयुतं कारयेद् बुधः ।
तत्र वङ्गं निषेक्तव्यं नागं वा सत्त[त्त्व]मानतः ॥ १० ॥

खरजं भावयेत्तेन सूतको ग्रसते क्षणात् ।
अभ्रकं नागवङ्गेन वासितं ग्रसते रसः ॥ ११ ॥

अम्लवर्गेण संयुक्तं यथालाभेन मर्दयेत् ।
अभ्रकादीनि चरति सर्वजो वासनामुखः ॥ १२ ॥

कृत्वा औदुम्बरे पात्रे अम्लवर्गेण बुद्धिमान् ।
लवणक्षारसंयुतं वङ्गं नागं वि[नि]षेचयेत् ॥ १३ ॥

शतधा भावयेत्तेन अभ्रकं बहुधा अधः ।
मर्दयेत्तेन संयुक्तमभ्रकं ग्रसते रसः ॥ १४ ॥

सुरायसमयस्कान्तं शैलाभ्रजसचीकरम् [ ? ] ।
रसलोहानि चान्यानि चारयेत्तेन योगतः ॥ १५ ॥

गन्धपाषाणकासीसैरम्लयुक्तैश्च साधयेत् ।
कांस्योदुम्बरजे पात्रे वङ्गं नागे निषेचयेत् ॥ १६ ॥

अभ्रसत्त्वादिचूर्णानि चूर्णयित्वा तु भावयेत् ।
खरजो[जं] भावयेत्तेन सोष्णान्तेनैव मर्दयेत् ॥ १७ ॥

सोष्णे खल्वे च इत्येवं सूतकः सर्वधातवः ।
खरजस्त्रुटिशो दत्त्वा आयसस्त्रुटितो[शो] रसः ॥ १८ ॥

मर्दनादेकतां याति सूतको नात्र संशयः ।
त्र्यहादूर्ध्वं तु संधानं यावत् सप्तदिनं भवेत् ॥ १९ ॥

पुनरन्यत् प्रकर्तव्यं चारयेद्विधिना बुधः ।
समं चतुर्गुणं वाऽथ अष्टद्वादशभावि[धापि] वा ॥२०॥

येन तेन प्रयोगेण यत्नतश्चारयेद्धनम् ।
निबन्धनमिदं प्रोक्तं सर्वजस्य बलप्रदम् ॥ २१ ॥

बध्यते रसलोहैर्वा त्वायसैश्च मृतै रसः ।
नागवङ्गैस्तु गुटिकां चक्राङ्कां निक्षिपेन्मुखम्[खे] ॥ २२ ॥

कांस्यपात्रे तु निष्ठीव्य मर्दनाभ्रं ग्रसेद्रसः ।
रसलोहानि सर्वाणि तीक्ष्णाद्यान्त्वायसान् ग्रसेत् ॥ २३ ॥

क्षुद्रमत्स्यांश्च अम्लेन पेषयित्वा उसेपयेत् [?] ।
अभ्रपत्राणि वङ्गेन अन्तरान्तरितं धमेत् ॥ २४ ॥

अम्लेन मर्दनात्सूतो ग्रसते ह्यभ्रकं चणात् ।
दरदाक·········सिन्धुकांक्षीकासीसगन्धकम् ॥ २५ ॥

स्वर्जिकां तिन्तिणी[डी]क्षारं दाडिमाम्लं तु दापयेत् ।
काञ्जिकेनार्कभाण्डे तु तक्रेणैवाऽथ सन्धयेत् ॥ २६ ॥

सप्ताहं भावयेदभ्रं मर्दयेत्तेन ह्युष्मगम् ।
अभ्रादिसर्वलोहानि चरेद्वै पारदेश्वरः ॥ २७ ॥

अल्प[म्ल]वर्गे यथालाभं कांक्षीकासीसता [तः] त्रिधा ।
तेनाभ्रं भावयित्वा तु मर्दनाद् ग्रसते रसः ॥ २८ ॥

अम्ला [म्ले]नौदुम्बरे पात्रे त्र्यहं सा वासना भवेत् ।
नागवङ्गस्य योगे वा त्रिरहं वासना भवेत् ॥ २९ ॥

कांक्षीकासीससहितैः स्वर्जिटङ्कणसैन्धवैः ।
अम्लेनौदुम्बरे पात्रे अन्या वा वासना त्र्यहम् ॥ ३० ॥

भावनान्मर्दनात् सूतस्त्वभ्रकं च चरेद्बहु ।
लवणक्षारोपरसैः रसैरुपविषैर्विषः[ षैः ] ॥ ३१ ॥

यथालाभेन संश्राव्य क्षारमूत्रः[त्रैः] पचेच्छुचौ ।
अभ्राद्यान्भावयेत्तेन तथा न (?) चरेद्रसः ॥ ३२ ॥

चारयेत्तेन विधिना क्रमादग्निसहो भवेत् ।
सैन्धवं कान्तकासीसं साधयेत् कान्ति[ञ्जि]केन तु ॥ ३३ ॥

तेनालोड्याभ्रचूर्णं तु ताम्रपात्रे निधापयेत् ।
द्वयोः संपुटयोगेन निरुच्छ्वासस्त्र्यहं भवेत् ॥ ३४ ॥

शोष्य तेनैव तद्ध्राव्य तेन मर्द्याभ्रकं चरेत् ।
चुक्रकाञ्जिकताम्रे तु पात्रे घृष्य त्र्यहं बुधः ॥ ३५ ॥

अभ्रतीक्ष्णादिलोहानां[नि] भावनान्मर्दनाद् ग्रसेत् ।
हेमतारारशुल्बानि घोषमेकत्र धामिता ॥ ३६ ॥

द्वात्रिंशत्षोडशेनाथ सूतकस्य नियोजयेत् ।
वङ्गनागानि वा योज्य शोधयित्वा विधानतः ॥ ३७ ॥

भस्मक्षारा क्षितीकासीश्चूलीकमम्लसंयुतः[तम्] ।
सितं माढरसंयुक्तं संसोष्णो ( ? ) निवेशयेत् ॥ ३८ ॥

एकाहमर्दनात् सूतो द्रुतगर्भे[र्भो] विधीयते ।
अम्लेन भावितं दद्यात् सोष्णं चैव तु मर्दनात् ॥ ३९ ॥

सुमुखं [च] भवेद् ग्रासस्त्वक···यकयस्य च ।
खजस्य सर्वसत्त्वानां कान्तशैलसुरायसैः ॥ ४० ॥

वासना सुमुखा चैव तेजसं सूतकस्य तु ।
क्रदः कार्यं ततः पश्चाद् ग्रासयेत् सर्वजं बुधः ॥ ४१ ॥

विषटङ्कणकासीसकांक्षी च कटुकत्रयम् ।
अर्जकं तुलसी शिग्रु-क्वथनमारनालकम् ॥ ४२ ॥

दर्शनं स्पर्शनं चैव तेजसं जायते रसे ।
चारणा तु ततः कार्या सोष्णा चैव तु मर्दनात् ॥ ४३ ॥

सूतके खलितशिरे त्वन्यथा न विधीयते ।
एवं तु चारणा कार्या शास्त्रदृष्टेन कर्मणा ॥ ४४ ॥

सर्वजस्य त्वहं वक्ष्ये निर्मुखं दिव्यचारणम् ।
विज्ञे[ज्ञा]य औषधीवर्गं यथा शास्त्रेऽप्युदाहृतम् ॥ ४५ ॥

जलजाः स्थलजाश्चैव सम्यग् ज्ञात्वा च बुद्धिमान् ।
जलजा उत्पली पद्मा स्थलजा तु प्रसारिणी ॥ ४६ ॥

जलनी[ज्वालिनी]अर्द्धचन्द्रा य[च]चित्रपर्णि त्रिपर्णिका।
सरचन्द्रौकसश्चैव तथा च जलमूलिका ॥ ४७ ॥

समङ्गा वारिसंभूता त्वपामार्गो जलोद्भवः।
अजमारी उपाबुश्च कुम्भकौ जलपिप्पली ॥ ४८ ॥

जलपर्वाबु[म्बु]शीता च कुमारी नागिनी तथा।
सितगन्धा खगाश्चैव तथा सर्पसुगन्धिका ॥ ४९ ॥

त्रिम्बी ब्राह्मी तुषी चैत्र मूर्तिर्मार्जारि[र]पादिका।
तथा चाञ्जलिकारी च मीनाक्षी त्वहिलोचना ॥ ५० ॥

यवचिञ्ची वराही च अपत्रा ईश्वरी तथा।
कुर्कुरी हलिनी चैव बृहती वज्रकन्दकः[का] ॥ ५१ ॥

मुशली वनमाला च विदार्या[री] मोहिनी तथा।
माण्डूकी लक्ष्मणा चैव दुर्गन्धा उत्तमा तथा ॥ ५२ ॥

शिखिपादी कपोती च नन्दिनी वृश्चिकालिका।
हंसपाती शिखा चैव सारिका वायसी तथा ॥ ५३ ॥

दन्ती गोजिह्विका चैव गु[गा]रुडी हेमपुष्पिका।
समङ्गा स्थलजा चैव मांसी पाषाणभेदिका ॥ ५४ ॥

अलम्बुसा[षा] मेघनादा शुकनासा उपोतिकी[दिका]।
क्षीरी च तुलसी चान्या मेषका च वनार्जिका ॥ ५५ ॥

वाराही वनकार्पासी तथा चैवापराजिता।
चतुःषष्टिगणो ह्येष औषधीनां प्रकीर्त्तितः ॥ ५६ ॥

एतास्तु सूतकस्यार्थे बन्धनं प्रति योजयेत्।
अष्टाष्ट[ष्टौ] वा नियोगेन अधस्तान्नैव कारयेत् ॥ ५७ ॥

सर्वधान्यानि निक्षिप्य आरनालाम्बु कारयेत्।
सपत्रमूलाः संक्षुद्य औषध्यस्तत्र निक्षिपेत् ॥ ५८ ॥

क्षितिकासीससामुद्रसिन्धुत्र्यूषणराजिकैः ।
संयुक्तं कारयेत्तं तु शोष्यं सप्ताहसंस्थितम् ॥ ५९ ॥

चुक्रारनालसंयुक्तं ताम्रभाण्डे तु सन्धयेत् ।
भावयेत्तेन गगनं पूर्वं संस्कृतमादरात् ॥ ६० ॥

पुटत्रयं तु दातव्यं पुनर्भाव्य विशोष्य वा ।
सोऽम्ले[ष्णे ?] खल्वे प्रदातव्यं तद्घनं सर्वजं कृतम् ॥ ६१ ॥

शोष्य सर्वं ततो दद्यादस्त्रं तत्रोपरि जये[पे]त् ।
ज्वालिनीं तु महामुद्रां बद्ध्वा विज्ञाप्य भक्तितः ॥ ६२ ॥

अघोरमन्त्रणार्थाय सर्वभूतहिताय च ।
महाकल्पायुषश्चैव त्वर्थं एष कृतो मया ॥ ६३ ॥

सिद्धो भव त्वमस्माकं शिववाक्यानुसारणात् ।
कर्तव्या तु शिवाज्ञा हि त्वयात्रैव मया तथा ॥ ६४ ॥

मर्दयेद्धल्लितशिरः भवजो ग्रसते घनम् ।
दण्डधृक् पयसाकारो जलौकाकारवद् भवेत् ॥ ६५ ॥

अविद्रुषा तथा छेदि दधिवन्नवनीतवत् ।
पिण्डश्च कठिनः ख्यातो ग्रासस्यैवाष्टलक्षणम् ॥ ६६ ॥

चतुःष[ष्ट्या] दण्डधारीं[री] चत्वारिंशेन पायसः ।
त्रिंशतेन जलूका च विंशत्या चैव विद्रुषः ॥ ६७ ॥

षोडशेन भवेच्छेद्यं दधिवद् द्वादशे भवेत् ।
अष्टमे नवनीताभश्चतुर्थे खण्डतां व्रजेत् ॥ ६८ ॥

प्रथमास्तु द्वयोर्ग्रासाश्चत्वारश्च द्वितीयकाः ।
तृतीयाः षट् समाख्याताश्चतुर्था अष्ट दापयेत् ॥ ६९ ॥

पञ्चमा दश चाख्याता षष्ठाश्चैव [क्रमेण तु] ।
दातव्या द्वादश ग्रासाः सप्तमास्तु चतुर्दश ॥ ७० ॥

अष्टमाः षोडश ख्याता विधिरेष च नान्यथा ।
अष्टग्रासविधानेन ततो मध्येन सूतकः ॥ ७१ ॥

अज्ञात्वा विधिमेनं तु मूढाः कुर्वन्ति चान्यथा ।
न तिष्ठेत् सूतकस्तत्र क्रियाहीने विनश्यति ॥ ७२ ॥

न सिद्ध्यति क्रियाहीने जीवजो मन्त्र एव च ।
शास्त्रोक्तं च विधिं ज्ञात्वा ततः साधनमाचरेत् ॥ ७३ ॥

आद्यास्तु चतुरः ख्याता त्रिंशग्रासाः प्रकीर्तिताः ।
दोलास्वेदेन ते जार्या अन्यथा नैव तिष्ठति ॥ ७४ ॥

भस्मक्षारान् पटुक्षारान् शिवमूलरसान्वितान् ।
दत्त्वा भूर्ज्जे तु आर्याम्बु क्षारमूत्रेण वा युताः ॥ ७५ ॥

रम्भादलेऽथवा बद्ध्वा कृत्वा गर्भद्रुतिं बुधः ।
कांक्षी कासीसगन्धा च क्षारक्षारपटूनि च ॥ ७६ ॥

सितमाठराम्बु सूकमुवाम्बु(?) वमनीरसम् ।
शोष्यः संमर्द्य विधिवद् यावद् गर्भद्रुतिर्भवेत् ॥ ७७ ॥

द्विचतुर्भिरदीप्तोऽपि गर्भद्रावी भवेद्रसः ।
ग्रासेन तु समं तौल्यं गालनं वाससा भवेत् ॥ ७८ ॥

मुख[-तः] सा क्रिया प्रोक्ता त्वथवा तां हि कारयेत् ।
पश्चाच्च जारयेत् सूतं विडस्योपरि दापयेत् ॥ ७९ ॥

तस्योपरि विडं दत्त्वा त्वष्टमांशेन बुद्धिमान् ।
वासे[न्यसेत्] वस्त्रेण संवेष्ट्य सुशुक्लेन दृढेन च ॥ ८० ॥

मुखे कुम्भस्य वै दद्यादवमानं तु बुद्धिमान् ।
मह्केनोपरिच्छाद्य यथा बाष्पो न निःसरेत् ॥ ८१ ॥

क्षारमूत्रेण तं कुम्भमर्धं चैव तु कारयेत् ।
आरनालेन वै तेन त्वधो ज्वाल्यं हुताशनम् ॥ ८२ ॥

कण्ठाधः कारयेद्रन्ध्रं द्रवं तेन नियोजयेत् ।
उद्घाटितमुखेनैव दातव्यं च द्रवं बुधैः ॥ ८३ ॥

दिवारात्रौ प्रकर्तव्यं यथाग्निर्नैव हीयते ।
तृतीये दिवसे सूतो जरति ग्रसितं तु यत् ॥ ८४ ॥

निःक्षिपेदायसे पात्रे क्षारमूत्रं तु दापयेत् ।
प्लावयित्वा मलत्यध्वा(?)सोष्णेन तु विधानवित् ॥ ८५ ॥

शीतले बहवो दोषा जायन्ते सूतकस्य तु ।
त्यजति ग्रासवीयं[र्यं] च सूदन्भूता व्रजेत्ततः ॥ ८६ ॥

आरनालेन वध्यं तं सन्धानौषधि यत्कृतम् ।
निपुणाश्चैव यत्कृत्वा द्रव्ययोगाद् द्रवं हरेत् ॥ ८७ ॥

सुधौतं निर्म्मलीकृत्वा दत्त्वा कर्षे तुवा[तुषा]ग्निषु ।
मर्दयेत् तं मनाक् तत्र यथा नैव स हीयते ॥ ८८ ॥

पातयेदूर्ध्वयन्त्रेण मृदुना चाग्निना त्वधः ।
सुसन्धिसन्धितं कृत्वा दीर्घभाण्डानि यन्मुखाः ॥ ८९ ॥

अष्टाङ्गुलमुखास्ते तु दीर्घास्ते षोडशाङ्गुलाः ।
सुगन्धितमुखाः कार्या वस्त्रमृत्परिलेपनात् ॥ ९० ॥

तत्र पातनयन्त्रेण सूतकादीन् निपातयेत् ।
रसांश्चोपरसांश्चैव ततः कर्मणि योजयेत् ॥ ९१ ॥

अथैकं निहितं भूमावूर्ध्वं दग्धोत्पला[दग्ध्वोपला]ग्निना ।
अधःपातनमेवोक्तं सूतकस्य गुणप्रदम् ॥ ९२ ॥

पटुराजिकविश्वाया आरनालेन पेषितम् ।
लेपयित्वोर्ध्वभाण्डं तु ततः पात्यस्तु सूतकः ॥ ९३ ॥

रसाश्चोपरसाश्चैव·········यन्त्रे गुणावहाः ।
शोधितं क्रमयोगेन सर्वकर्मसु योजयेत् ॥ ९४ ॥

वस्त्रवर्तिनियोगेन केशैर्वा शूकरोद्भवैः ।
कङ्कबर्हिणपत्रैर्वा गृहीत्वा यत्नतो बुधः ॥ ९५ ॥

ततः सोष्णे क्षिपेत् व[ख]ल्वे द्रवं सोष्णे निधापयेत् ।
हत्वामं मर्दयेत् सूतं यथामन्त्रं तथोपरि ॥ ९६ ॥

चतुर्ग्रासविधानेन विंशग्रासक्रमे गते ।
नोर्ध्वजे यन्त्रमध्यस्थोऽप्यथोर्ध्वं तिष्ठते रसः ॥ ९७ ॥

ततस्त्वन्यान् दशग्रासान् पञ्चमे तु व्यवस्थितान् ।
धारयेदग्निसोमे तु यन्त्रे कच्छपसंज्ञिते ॥ ९८ ॥

दत्त्वाधः खर्परं विद्वान् विडं तत्र नियोजयेत् ।
गर्भद्रुतिं पुरा कृत्वा पुनर्दत्त्वा बिडं बुधः ॥ ९९ ॥

ततश्चाधोमुखीं दद्यात् क्षुद्रां लोहकटोरिकाम् ।
सन्धिलेपं ततः कुर्यात् पट्वम्लक्षारपेषितः ॥१००॥

कर्षाङ्गारान् तुषान् वाथ दीप्तांस्तत्र निधापयेत् ।
एवं कृत्वा विधानज्ञो यथाग्निर्न च हीयते ॥१०१॥

तृतीये च जरेत् सूतः पुनः कृत्वा च पूर्ववत् ।
तथान्ये द्वादश ग्रासाः षष्ठे मासे व्यवस्थिताः ॥१०२॥

जार्याः कच्छपयन्त्रेण त्वधस्तोयेन दापयेत् ।
तथान्ये सप्तमे ग्रासे[मासे] ग्रासाः ख्याताश्चतुर्दश ॥१०३॥

कन्दमध्ये विनिक्षिप्य विडमध्यगतं रसम् ।
कर्षाग्नौ वारुणाग्नौ वा स्वेदयेज्जरति क्षणात् ॥१०४॥

तुषमृत्तिकया लेपं दातव्यं कन्दबाह्यतः ।
वज्रकन्दस्तथा वन्ध्या वनमाला च शूकरी ॥१०५॥

कञ्चुकी कारवल्ली च वायसी कटुतुम्बिका ।
शुकनासा तथा तुम्बी अमृता नाभिकन्दजा ॥१०६॥

जारयेत्तेन विधिवत् सर्वलोहानि सूतके।
बीजानि यानि चोक्तानि विधिनानेन जारयेत् ॥१०७॥

विडयोगेन विधिवत्ततोऽस्त्यग्निसहो भवेत्।
तथा [-चा] न्येऽष्टमे मासे ग्रासाः षोडश कीर्तिताः ॥१०८॥

जार्या मूषोदरे ते तु दत्वा क्षवं (?) सशर्करम्।
क्षारमूत्रेण तुत्थं तु विडगर्भे रसं न्यसेत् ॥१०९॥

मूकयित्वा तु विधिवत् कर्षाग्नौ तां निधापयेत्।
जरत्येवं क्षणादेव सूतको नात्र संशयः ॥११०॥

जीर्णस्य लक्षणं ज्ञेयं श्लक्ष्णवस्त्रे दृढे कृतः।
चतुर्गुणे तु विधिवत् पत्रोपरि निपीडयेत् ॥१११॥

यदा यत्र[तत्र] न तिष्ठेत्तु ग्रासयुक्तं च सूतकम्।
तदा जीर्णं विजानीयादथ मानं तुलाकृतम् ॥११२॥

गर्भद्रुतस्य ज्ञातव्यमथवा तु क्षयं गतः।
गर्भद्रुतस्य सूतस्य भवेद्वै दण्डधारणम् ॥११३॥

यदा न धारयेद् दण्डं तदा जीर्णं विदुर्बुधाः।
गर्भद्रुतस्य सूतस्य जायते नैव विप्लुषः ॥११४॥

यदा त्रिपुटवान् सूतस्तदा जीर्णं तु लक्षयेत्।
अभ्रजीर्णे[र्णो] यदा सूतः कपिलक्षीरवर्णकः ॥११५॥

सितेन तु विजानीयात् तारकर्मणि बुद्धिमान्।
पीतेन दृश्यते सूतश्चीर्णेनैव···केन तु ॥११६॥

पीतोपधानशुद्धाश्मरक्तकृष्णेन चैव हि।
पीतं रक्तं तथा कृष्णं हेमकर्मणि जारयेत् ॥११७॥

श्वेतं वा बलमाधत्ते पश्चाद्रागं तु कारयेत्।
पीतरक्तायसश्चैव रसोपरससंयुतैः ॥११८॥

अनेन तु विधानेन रसलोहायसान्यपि ।
चारयेज्जारयेत् सूते बीजाः सांयोगिकास्तथा ॥११९॥
कृष्टिर्वा शृङ्खला बीजा द्वन्द्वबीजानि यानि च ।
अभ्रयुक्तांस्तु हेमाद्यान् विधिनानेन जारयेत् ॥१२०॥
वक्ष्यामि इन्द्रजान् बीजान् सूतकस्य निबन्धने ।
हेमादिकान् प्रवक्ष्यामि यथाविधि नियोगतः ॥१२१॥
पूर्वसंस्कृतमभ्रं तु क्षारादिभिः सुचूर्णितम् ।
कदली काकमाची च वर्षाभूः सपुनर्नवा ॥१२२॥
चिर्पोटिका ······ नाशीरस्तु सुघर्षितम् ।
शुद्धहेम तु सूतेन षेषयित्वा तु यत्नतः ॥१२३॥
योज्यं टङ्कणपादं तु पिण्डयित्वा तु अभ्रकम् ।
धमेद् धामाभ्रकं दिव्यं सूतकस्य निबन्धनम् ॥१२४॥
ना[ता]रारेन्दीवरे चैव नागवङ्गे नियोजयेत् ।
अथवा नागवङ्गं तु द्रावयेद्दापयेत् सितम् ॥१२५॥
तत्तु अतिभवेद्यत्र खरजस्तत्र निःक्षिपेत् ।
वंशकाष्ठेन चालोड्य त्वभ्रके मिलति क्षणात् ॥१२६॥
यदा चीर्णं भवेत्तत्तु मिलितं च तदा भवेत् ।
कार्पासास्थि कुलत्थानि लाङ्गली चाश्मभेदकः ॥१२७॥
भूलता इन्द्रगोपाश्च वन्य[धन्व ?]नागशिरस्तथा ।
तरक्षुचमरीकेशा गन्धमूषिकया सह ॥१२८॥
स्त्रीस्तन्येन प्रलेपोऽयमभ्रसत्त्वेन योजयेत् ।
हेमादीनां तु लोहानां कान्तशैलं तु सस्यकम् ॥१२९॥
सुरलोहवज्रलोहरसलोहानि यानि च ।
गुहागतानि ध्मातानि मिलन्त्यत्र न संशयः ॥१३०॥

द्वन्द्वमेलापको योगः संकरेषु नियोजयेत् ।
पुरः सर्जो गुडो लाक्षा पोतकी चित्रकस्तथा ॥१३१॥

आपाम्बु त्वग्निकी चैव द्वन्द्वयोगं रसायने ।
विषोपविषकीटानि वर्ज्जयेच्च रसायने ॥१३२॥

द्वन्द्वयोगेऽभ्रकेणैव सूतकस्य निबन्धनम् ।
समेन सत्त्व[शत]वेधी स्याद् द्विगुणेन सहस्रकः ॥१३३॥

चतुर्गुणेन लक्षं तु कोटिरष्टगुणेन तु ।
तथा षोडशधा चीर्णस्तद्विधः सूतकः कृतः ॥१३४॥

वेधयेत् सर्वलोहानि स्पर्शधूमावलोकतः ।
दीर्घमूषोदरस्थं तु सारयेदग्नियोगतः ॥१३५॥

द्वन्द्वमेलापके योगे तैलेन सह योजयेत् ।
उक्तैकेन सुमेधावी पटुक्षारसमायुतम् ॥१३६॥

सुदृढां दीर्घमूषां तु कर्षाग्नौ संनिधापयेत् ।
सुतप्तेषु [तु] ततस्तैले बीजमावर्त्य बुद्धिमान् ॥१३७॥

दीर्घसन्दंशकेनैवमावर्त्य संक्षिपेद् बुधः ।
न तस्योर्ध्वमुखं कुर्यान्नदहन्नकरं बुधः ॥१३८॥

न विश्वसेद्धि सूतस्य सुकृतस्य विधानतः ।
न त्यजेत्तु गुणं सूतः सूतकः खगसिंहवत् ॥१३९॥

यथा खं[पं]जरसंस्थस्तु बालत्वात् पक्षिजो महत् ।
अनेककालसंस्थायी मुक्तस्तु पुनरुत्पतेत् ॥१४०॥

बालत्वात्तु यथा सिंहो निहितः पञ्जरे सदा ।
वृद्धा[द्ध]भावेऽपि मुक्तः सन् नखदन्तसुभाखुराः(?) ॥१४१॥

हत्वा यदागतस्तस्य वनदुर्गं समाश्रयेत् ।
सूतकोऽपि कृतस्त्वेवमग्निमध्यप्रतिष्ठितः ॥१४२॥

असारिते[तो] व्रजेद् भूयस्त्यक्त्वा सावजितान् गुणान्।
सारणे कारयेद् यत्नं क्रामणैः सुसमन्वितः ॥१४३॥

वेधकालोऽपि दातव्यो यथोक्तक्रमयोगतः।
तदा मण्डूकतां याति आरोटस्तु यदा भवेत् ॥१४४॥

तस्मात्तं सारयेद् यत्नात् सूतकं तु विधानतः।
अल्पस्य कारयेद् यत्नं सुकृतस्तु यथा तथा ॥१४५॥

सारणा ह्यग्निमूषायां सममावर्त्तमेव वा।
नातिक्रामति मर्यादां वेलामिव महोदधेः ॥१४६॥

सुकृतस्तु यदा सूतः समावर्तस्तदा भवेत्।
एकतस्तु कृतं बीजं धाम[ध्माप]येन्महदग्निना ॥१४७॥

क्रामणं द्वन्द्वयोगाश्च ओषध्यश्च नियामिकाः।
पक्षच्छदकरायास्तु तदा तस्य स्वकारणम् ॥१४८॥

मन्त्रसिद्धो यथा देही तत्त्वज्ञस्तु क्रियां विना।
करोति पाशविच्छित्तिं सुकृतः सूतकस्तथा ॥१४९॥

क्रियासारणनिर्मुक्तः क्रामणैस्तु विवर्जितः।
उत्तमत्वं नय[ये]त् सत्त्वान् स्पर्शधूमावलोकतः ॥१५०॥

सूतकस्य बलं ज्ञात्वा यथाकर्मविधानतः।
सारणा तत्त[त्र] कर्तव्या त्वनेनैव विधानतः ॥१५१॥

दुर्बलो बलिनं ज्ञात्वा कारयेत् सारणाविधिम्।
दुर्बलः क्रामणैर्युक्तो धारणीयो विधानतः ॥१५२॥

वह्निनापि क्रियादोषः सत्त्वमि[मा]श्रित्य तिष्ठति।
क्रामणैः क्रामयेत्तस्माज्ज्ञात्वा सम्यग्विधानतः ॥१५३॥

विष्णुक्रान्ता हली भृङ्गी मानुषी पुष्पमायजम्(?)।
रक्तवर्णमलं चैव ध्वाङ्क्षविण्मधुसिक्थकम् ॥१५४॥

गुञ्जा च कोकिला मूत्रं तथा माक्षिकगोपकम् ।
मक्षिकाणां पुरीषं तु भूलतार्कजसंयुतम् ॥१५५॥

स्त्रीस्तन्येन च संयुक्तं क्रामणं महदद्भुतम् ।
मेलकं सर्वलोहानां सारणातैलयोजितम् ॥१५६॥

न चोद्विजति सूतं तु बालसारणकर्मसु।
यथाभ्रहीनः सूतस्तु बद्ध्यते बीजसंयुतः ॥१५७॥

बीजेन बध्यते सूतः सूतको बीजबन्धनः ।
तद्बीजं चैव वक्ष्यामि राजकृष्टिश्च या भवेत् ॥१५८॥

जाम्बूनदं भवेच्छुद्धं शुद्धलोहेषु योजितम् ।
समानि कृत्वा बीजानि रसाश्चोपरसास्तथा ॥१५९॥

शुद्धाश्च हेमगा ये च वायक्रान्तैः (?) क्रियाद् बुधः ।
क्षाराम्लभाविताः कार्या वापनेषु गुणावहाः ॥१६०॥

पटुक्षारयुतान् स्नेहान् सेचयेद्रञ्जयेद् बुधः ।
सर्वलोहान् धनि[मि]त्वा तु रसोपरसवापनैः ॥१६१॥

निर्मलं धारयेद् बीजं सूतकस्य निबन्धनम् ।
अथान्यत्तु महाबीजं स्पर्शान्तं तु रसायने ॥१६२॥

वैक्रान्ताभ्रायसं शैलं कान्तजं तु सुरायसम् ।
काञ्ची च सस्यकं चैव क्षेत्रजं तु रसायसम् ॥१६३॥

माक्षिकामलसत्त्वं च रस…महाद्भुताः ।
तेषां मध्ये हेमतारं शुल्वं सचीमरम् ( ? ) ॥१६४॥

अन्धमूषागतं ध्मातं रसोपरसवापनात् ।
भाविता[तो] वेतसाम्लेन रागं मुञ्चति चायसम् ॥१६५॥

मध्वाज्यज्योतितैले वा निषेक्तव्यं मुहुर्मुहुः ।
समभागानि सर्वाणि रसोपरसगर्भिताः ॥१६६॥

संकरं रसगन्धं तु सर्वेषामुत्तमोत्तमम् ।
एकद्वित्रिभ्यो लाभेन न भवेत्तद्गुणावहम् ॥१६७॥

रसायने रसे चैव महावीर्ये गुणोदयम् ।
दीर्घायुष्यप्रदः सूतः खेचरत्वप्रदो भवेत् ॥१६८॥

संयोगेनास्य बीजस्य सूतकस्तु निबध्यते ।
ग्रासेन प्रथमेनैव पक्षच्छेदो विधीयते ॥१६९॥

समेन बन्धमायाति स्वग्निस्थात्पयसांश्चरेत् ।
उत्क्रमेण विधिवद्बीजमेत्य वशं नयेत् ( ? ) ॥१७०॥

वज्रमूषोदरस्थं तु षोडशाष्टांशयोजनात् ।
चतस्त्रिसमं दद्यादष्टाष्टकविभागतः ॥१७१॥

विडेन गर्भमूषा तु कर्तव्या सृष्टिसंयुक्ता ।
अम्लवर्गेण संपेष्य क्षारक्षारपटूनि च ॥१७२॥

रक्तवर्गेण संयुक्तां गर्भमूषां तु कारयेत् ।
तत्र गत्वा रसं बीजं काष्ठके खादिराग्निना ॥१७३॥

धाम्यमानं चरेद् बीजं सर्वलोहेषु शङ्करम् ।
धारयेत्तत्त्वसङ्ख्यातं विधिमानेन बुद्धिमान् ॥१७४॥

तत्त्वान्तिमो यदा ग्रासस्तदा वज्रीभवेद्रसः ।
परतत्त्वगुणः श्रीमान् शिवतत्त्वगुणो मतः ॥१७५॥

तेन वज्रस्थितेनैव जायते ह्यजरामरः ।
सर्वामयविनिर्मुक्तो दिव्यदेहत्वमाप्नुयात् ॥१७६॥

षण्मासात् खेचरत्वं च त्वब्दैकेन शिवोपमः ।
अणिमादिगुणावाप्तिर्जायते नात्र संशयः ॥१७७॥

सुवर्णेनोद्धृतः सूतः सुदेहं गोपयेत् सदा ।
विचरेत् सर्वभवनान् स्वच्छन्दशिवरूपधृक् ॥१७८॥

सर्वलोहानि निर्वाह्य हेमशो[शे]षं तु कारयेत् ।
तेन तत्साधयेत् सूतं मूषायां महदग्निना ॥१७९॥

वेधयेत् सर्वलोहानि स्पर्शधूमावलोकतः ।
आरोटेन समायुक्तोऽप्यग्नियोगादसौ रसः ॥१८०॥

बध्यते तत्क्षणादेव शतसाहस्रयोगतः ।
ह्रस्ववेधी भवेत् सूतः शतादूर्ध्वं महाबलः ॥१८१॥

शतेन शतिको ज्ञेयो बिम्ब[-यो]गात् सहस्रशः ।
दशांशाल्लक्षवेधी स्यात् कोटिवेधी समेन तु ॥१८२॥

हेम्ना तु हेमकारी स्यात् सितेन सितकारकः ।
बीजहीनोऽपि संचीर्णः षष्टयोगेन सादितः ॥१८३॥

रञ्जकोऽयं तारकस्य शतसाहस्रवेधकः ।
रसायनोपयोगेन बालार्कसदृशो भवेत् ॥१८४॥

कृष्टिरागारविन्देन तारेण तु विवर्जिते ।
नीलोत्पलदलाभासो जायते ह्यजरामरः ॥१८५॥

तारसोमसमाकारो द्वितीय इव शङ्करः ।
उत्तप्तकाञ्चनाभासो हेमबीजेन जायते ॥१८६॥

क्षुत्पिपासामयेनैव विषाग्निसलिलादिभिः ।
..................मन्त्रयोगैश्च अभिचारैर्न हन्यते ॥१८७॥

कल्पस्थायी भवेत् सिद्धो द्वितीय इव शङ्करः ।
अणिमादिगुणोपेतः स्वच्छन्दः क्रीडति ध्रुवम् ॥१८८॥

येन येन[केन]तु बीजेन बुधो बध्नाति सूतकम् ।
सूतकेन निबद्धेन भुक्तिं मुक्तिमवाप्नुयात् ॥१८९॥

यथा समाग्नियोगेन तारबीजादितो रसम् ।
संस्कार्य विधिना सम्यक् तारबीजमतः शृणु ॥१९०॥

तारबीजम्

तारं शैलं तथा वङ्गमारं तीक्ष्णं भुजङ्गमम् ।
काञ्च्यभ्रसंकरं श्वेतचारकर्मणि योजयेत् ॥१९१॥

सितमाक्षीकविमलां पिण्डतालं तथाञ्जनम् ।
श्यामा काङ्क्षी च कुनटी सितगन्धं तु वापयेत् ॥१९२॥

तारावशेषितं यावत् नक्ततैले निषेचयेत् ।
क्रामणेन समायुक्तं बीजं रसनिबन्धनम् ॥१९३॥

तारयोगे प्रकर्तव्यं केवलं सारणेषु च ।
श[स]ङ्करं चारयेदादौ यदि बीजं तु निर्गतम् ॥१९४॥

शुद्धेन चारयेत् पश्चात् सर्वबीजेष्वयं विधिः ।
वज्राभ्रकेन संयुक्तं रसलोहेन शङ्करम् ॥१९५॥

कृत्वा चारणयोगेन क्रमान्मध्ये तु सूतकः ।
कन्यकस्य भवेत् कृष्टिर्हेमयोगस्य साधिनी ॥१९६॥

समं निर्वाहयेद्वङ्गं द्विगुणं विमलं बुधः ।
त्रिगुणं वाहयेन्नागं रसोपरसवापनैः ॥१९७॥

यथालाभेन शुद्धैस्तु साम्लस्नेहेन मर्दितैः
पटुक्षारसमायुक्तैर्यावच्छुल्वावशेषितम् ॥१९८॥

ज्योतिस्तैले निषेक्तव्यमथान्ये रागनिर्गते ।
क्षिपेदष्टगुणं वारि रागवर्गं[र्जं] कृतं तु तत् ॥१९९॥

क्षीरे चतुर्गुणे तं तु आद्ये तैले तु वा क्षिपेत् ।
उत्कैके (?) तु विधानज्ञः क्रामणार्थं वसां क्षिपेत् ॥२००॥

वसाहीनास्तु ये स्नेहा न ते क्रामन्ति धातुषु ।
क्रामणेन समायुक्तं निषेकार्थं तु योजयेत् ॥२०१॥

एषा कृष्टिः परा ख्याता सूतकस्य निबन्धिनी ।
रागप्रदा समाख्याता चारिता सारिता तु सा ॥२०२॥

इन्द्रगोपनिभं सूतं कुरुते नात्र संशयः ।
तारं तु योजयेत्तत्र सुध्मातोऽर्धार्धनिर्गतम् ॥२०३॥

तदर्धे योजयेद्धेम द्विवर्णपतितं भवेत् ।
तेन रक्तेन तैलेन रसोपरसभाविताः ॥२०४॥

त्रिरूर्ध्वं पञ्च सप्तैव तारं तेन पचेत् पुटे ।
सप्तसंख्या, भवेच्चूर्णं तथा शुष्कं तु कारयेत् ॥२०५॥

तद्रजस्तेन तैलेन पिण्डीं बद्ध्वा तु धामितम् ।
संभवेत् पीतसारं तु हेमैकद्वययोजितम् ॥२०६॥

अङ्गारैर्वा पुटेनाथ भागमेकं क्षयं नयेत् ।
रक्तवर्गे तथा तैले निक्षिप्तं कनकं भवेत् ॥२०७॥

द्विवर्णपतितं ज्ञेयं कृष्णतापं विधीयते ।
साकृष्टिं षोडशांशेन दशांशेनाथ योजयेत् ॥२०८॥

पीततारसिते हेम्नि सर्वद्वयगुणावहम् ।
सिन्धु[:]कांक्षी सकासीसं दरदं गन्धकं तथा ॥२०९॥

सौवर्चलं षडेतांश्च चूर्णितानुक्तभावितान् ।
रक्ततैलेन तप्ता[प्त्वा]थ सितहेमपुटे पचेत् ॥२१०॥

त्रिपुटेनाक्षयं दिव्यं द्विवर्णमधिकं भवेत् ।
रक्तस्नेहेन संयोज्य रसांश्चोपरसान् बुधः ॥२११॥

पद्मारसमायुक्तांस्तेन शुल्वं पुटे पचेत् ।
तद्रजस्तेन रागेण स्नेहेनैव तु मोदयेत् ॥२१२॥

प्रधमेदन्धमूषायां प्रकाशायां पुनर्धमेत् ।
रागस्नेहे निषेक्तव्यं जपापुष्पसमप्रभम् ॥२१३॥

सिते हेमविनिर्योज्य षोडशांशेन बुद्धिमान् ।
द्विवर्णलाभमाधत्ते धूपो नैवेद्यकारणे ॥२१४॥

तथा तारं तु निर्वास्य त्रिगुणं पीततां नयेत् ।
रागस्नेहे निषेक्तव्यं हेमार्धेन नियोजयेत् ॥२१५॥

द्विवर्णपतितं हेम कूष्माण्डकुसुमप्रभम् ।
एकैकरससंयोगात् रसोपरसवापनात् ॥२१६॥
हेमबीजं प्रवक्ष्यामि [तारबीजं च कथितं] सूतकस्य निबन्धनम् ।

हेमबीजम्

तार [हेम] बीजं प्रवक्ष्यामि यथाक्रमनियोगतः ॥२१७॥

हेमभागं भवेदेकं नागभागत्रयं भवेत् ।
त्रिगुणं सस्यकं तत्र वाहयेद्रक्तसेचितम् ॥२१८॥
राजावर्तं च तुत्थं च विमलं रसकं तथा ।
माक्षिकं रक्तपीतं वा शैलजं दरदं तथा ॥२१९॥
गैरिका कुनटी ताप्यमेकैकं तु पृथक् पृथक् ।
गन्धमाक्षीककासीसमेकैकेषु नियोजयेत् ॥२२०॥

एते पृथक् पृथग् बीजाः सूतकस्य निबन्धकाः ।
अथैकेषु त्रिगुणो [गुणतो] बीजेषु वाहयेद् बुधः ॥२२१॥

रसकामलकांक्षीका षट् बीजास्तु भवन्त्विमे ।
पृथक् पृथक् कृते सूते भवेत्तु बन्धरञ्जकाः ॥२२२॥

अथ तीक्ष्णाद् द्विषड् बीजं चारयेच्चैव सूतकम् ।
हेमबीजे तु संचीर्णे कुर्यात् साहस्रकं रसम् ॥२२३॥

एतत् कृत्वा विधानं तु यथा चाक्षयतां व्रजेत् ।
सूतकं तं तु संस्कृत्वा न पुनः कारयेद् यथा ॥२२४॥

पूर्वसंस्कृतमभ्रस्य गृह्य भागं तु बुद्धिमान् ।
रसाश्चोपरसाश्चैव लोहचूर्णश्च तैर्हताः ॥२२५॥

लवणाश्च तथा क्षारा भावयेदौषधी रसैः ।
द्रावकैश्च तथान्यैश्च पित्तस्नेहैश्च भावयेत् ॥२२६॥

टङ्कणश्च तथा गुञ्जा गन्धमूषिकसैन्धवम् ।
राजिका गृहधूमं च धन्वनागशिरस्तथा ॥२२७॥

कान्तं च लाङ्गली चैव विषमर्कटजालकम् ।
भूलता इन्द्रगोपश्च स्त्रीस्तन्येन तु भावयेत् ॥२२८॥

मूषालेपस्तु कर्तव्यस्त्वधोमूषा[षां] धमेत्ततः ।
आरोप्य बध्यते क्षिप्रं शतसाहस्रवेधकः ॥२२९॥

सत्त्वपातनयोगेन वज्रमूषोदरे स्थिते ।
दीप्तानलं तु विज्ञाय शुद्धज्वालातितैजसम् ॥२३०॥

क्लिद्यते तु यथा मूषा पतितं तु तदा भवेत् ।
विधिवद् ग्राह्य यत्नेन पुनर्मूषोदरे क्षिपेत् ॥२३१॥

पूर्ववल्लेपयित्वा तु अन्धयित्वा तु संदधेत् ।
आवर्तितं तु मिलितं हेमपादे नियोजयेत् ॥२३२॥

तद्बीजचीर्णजीर्णस्य पूर्वजस्य तु पादतः ।
अम्लौषधियुतं मद्यं द्रावयेदग्निमूषगम् ॥२३३॥

द्रावणं तु प्रवक्ष्यामि गर्भादीनां यथा भवेत् ।
क्षारमूत्रं च संगृह्य शोषयित्वा यथावतः(?) ॥२३४॥

षट् पट्टूनि त्रयः क्षाराः कर्पूरं श्वेतमा[-ठ]रम् ।
जल······कं च दध्वा च दध्योदक[केन]गालिताः॥२३५॥

तद्वारिणाथ तद्गाल्य शोषयित्वा च ग्राहयेत् ।
कनकस्य पलान्येवं वेष्टयित्वा च वेष्टयेत् ॥२३६॥

चणकाम्लं च निक्षिप्य दद्याच्चैवाम्लवेतसम् ।
अम्लवर्गेण तद्भाव्यं शोषयित्वा च बुद्धिमान् ॥२३७॥
क्षारमूत्रेण विधिवत् पाचयेच्च महाविडम् ।
मृदुना वह्निना युक्तां लोहपात्रे त्वथाग्निना ॥२३८॥
सिकतां तत्र निक्षिप्य धरापात्रे तथोपरि ।
तस्योपरि विडं दद्यात् खरमूत्रेण सेचयेत् ॥२३९॥
घट्टयेच्चैव काष्ठेन शुष्के शुष्के परिक्षिपेत् ।
शोषयित्वा समं तत्र विड एष महाबलः ॥२४०॥
ग्रासमध्ये क्षिपेत् किञ्चित् सोष्णमम्ले निधापयेत् ।
सोष्णेन मर्दयेत् तं तु मुहूर्त्तमायसे स्थितम् ॥२४१॥
क्षणाद् गर्भद्रुतिः ख्याता तप्ते सूते विनिक्षिपेत् ।
वंशकाष्ठेनावलोड्य ······ रञ्जते क्षणात् ॥२४२॥
अभ्रचूर्णं तथा पात्रं लो[ले]पयित्वा तु धाम[ध्माप]येत् ।
पुनस्तप्ते तु निक्षिप्य द्रवत्यग्निं प्रतापनात् ॥२४३॥
आयसानि तु रत्नानि अग्निसूर्यातपे महत् ।
द्रावयेत् तत्क्षणादेव वज्रादीन्यायसान्यपि ॥२४४॥
द्रुतास्तिष्ठन्ति सर्वे ते सशेषा लेपवर्णि[र्जि]ताः ।
समेन योजिताः सूता द्वन्द्वयोगेन संयुताः ॥२४५॥
आरोटो बध्यते क्षिप्रं सन[शत]साहस्रबेधकः ।
लक्षकोटिस्तथा बद्धो पलेनैकेन बुद्धिमान् ॥२४६॥
निष्पावमात्रयोगेन त्वयुतप्रयुतायुषाः ।
नियुतेऽत्र महाकल्पं गुण[णा]ष्टकयुतो भवेत् ॥२४७॥
घनजा(?)वेन सूतं तु कारयेत् तं महोदयम् ।
समेन द्विगुणेनाथ चतुरष्टगुणेन वा ॥२४८॥

दश विंशाथ षड्विंशभागाश्चार्याथ सूतके ।
भवेद् वज्रोपमः सूतः स्पर्शधूमावलोकतः ॥२४९॥

वेधयेत् सर्वलौहानि हेमतां नयति क्षणात् ।
उत्तरोत्तरदीर्घस्तु लक्षकोट्यंशवेधकः ॥२५०॥

लेपेनैकस्य सूतस्य गुह्यमेतत् प्रकाशितम् ।
रसायनेषु प्रवरः पलेनैकेन सूतकः ॥२५१॥

रक्तिकार्धोपयोगेन मात्रादौ सर्षपो भवेत् ।
दिव्यदेहमवाप्नोति महाक[ल्पायु]रुद्भवेत् ॥२५२॥

खेचरत्वाणिमाद्याश्च गुणा भवन्ति योगजाः ।
वज्रोपमेन बद्धेन गुटिकाधारणान्मुखे ॥२५३॥

षण्मासाज्जायते मर्त्यो जरामयविवर्जितः ।
दिव्य हेम[देह]मवाप्नोति चाब्दैकेन न संशयः॥२५४॥

विचरेत् सर्वलोकेषु द्वितीय इव शङ्करः ।
वज्रबन्धादि यत् सूतं कृतं यज्ञोपयोगिनाम् ॥२५५॥

रसायनोपयोगेन तन्मध्याद्यत्समुद्धृतम् ।
तन्मात्रे निक्षिपेदन्यां षोडशेन तु बुद्धिमान् ॥२५६॥

अधस्तान्नैव दातव्यमहोरात्रेण तद्गुणः ।
रसधेनुरियं ख्याता त्वक्षया नित्यमेव तु ॥२५७॥

व्ययीकृता न हीयेत त्वक्षया रसधेनुका ।
अपि सर्वं क्षयं गच्छेत् त्रैलोक्यं सचराचरम् ॥२५८॥

न चैकसूतकवरः कृतोऽनेन विधानतः ।
न च क्षयं पुमान् गच्छेद्येनासावुपयुञ्जति ॥२५९॥

वज्रकायो भवेत् सिद्धोऽवध्यः शस्त्रविषाग्निना ।
यन्त्रमन्त्राभिचारैस्तु नैव मृत्युमवाप्नुयात् ॥२६०॥

तपोयुक्तैर्मुनिवरैः सिद्ध[ः] शापैर्न हन्यते ।
विचरेत् सर्वभुवने दिव्यदेहस्तु खेचरः ॥२६१॥

सा[स] एवं रस उद्दिष्टः श्लेष्मस्वेदेन यस्य तु ।
मूत्रविष्टाभ्यां यल्लोहं स्पृष्टं तद्धेमतां व्रजेत् ॥२६२॥

क्रीडेच्च सर्वभुवने जम्बूद्वीपे चराचरे ।
एवं रसेन सिद्धस्तु अनौपम्यगुणो भवेत् ॥२६३॥

विधिना बीजबन्धस्तु कर्तव्यश्च यथा तथा ।
एकेन वाथ बीजेन बध्यते सूतकः क्रमात् ॥२६४॥

अभ्रसूतायसेनैव एकेनैव निबन्धनम् ।
खाखाभ्रं चैव आराभ्रं नागाभ्रं हेमकारकम् ॥२६५॥

वङ्गाभ्रं चैव ताराभ्रं तारादिजमथापि वा ।
वङ्गाद्रिजं सिताद्रिश्च तारयोगेषु युज्यते ॥२६६॥

हेमाभ्रसूतकस्योक्ते बन्धनं तु महागुणम् ।
हेमाद्रिज[ः] खजाद्रिश्च ब्राह्मणाद्युरगाद्रिजम् ॥२६७॥

हेमकर्मणि स्यादेतत् क्रमात् सूतकबन्धनम् ।
वज्रं देवायसं कान्तं काञ्चीं शैलमथापि वा ॥२६८॥

हेमबीजं तु हेम्नैव तारबीजं सितेन तु ।
संयुक्ता भवेयुर्बीजाः पृथक् सूतकबन्धनात् ॥२६९॥

वज्रं गुणावहं हेम्नि तारे वाथ नियोजयेत् ।
पादेन बध्यते सूतः समं कोटिप्रभेदतः ॥२७०॥

भस्मवैक्रान्तकेनैव उक्तकन्देषु योजितः ।
मूत्रक्षारनियुक्तस्तु तारहेम्ना नियोजितः ॥२७१॥

ध्मातो निबध्यते सूतो भस्मबद्धः क्षणाद् भवेत् ।
रसायनेषु प्रवरो बीजे चोक्तमहोदयः ॥२७२॥

वर्जयेन्नागवङ्गौ च रसायनविधौ सदा ।
श्रेष्ठस्तु घनसंचीर्णस्तीक्ष्णकाञ्ची तथा व्रजैः ॥२७३॥
कान्तं वा सुरलोहं वा सस्यकं वज्रमेव वा ।
ताम्राद्तारमेवं हि चारयेच्च पृथक् पृथक् ॥२७४॥
अथवा श[स]ङ्करं चार्यं रसायनविधौ मतम् ।
एकैकेनाथ लौहेन त्वभ्रकेन[ण] तथा रसः ॥२७५॥
आदिचीर्णो भवेच्छ्रेष्ठो रसायनगुणोदयः ।
वज्रबद्धो विशेषेण श्रेष्ठः सर्वरसायने ॥२७६॥
शिलाजतुयुतं हेम रसबन्धे वरं महत् ।
माक्षीकसत्त्वहेम्ना तु यदा बद्धस्तु सूतकः ॥२७७॥
रसायने रसे चैव संभवेत् सूतको वरः ।
विमलस्यायसत्त्वेन रसो योग्यो रसायने ॥२७८॥
शिलाजतुयुतं हेम त्रिगुणेन विनिर्गतम् ।
चारितं जारितं सूते हेमकृच्च रसायने ॥२७९॥
सितेन सितकारी स्याद्रक्तो हेम्नि रसायने ।
कृष्णेन संयुतं हेम तारं वा उभयोर्मतम् ॥२८०॥
उक्तबीजैः स्वहीनैश्च द्रव्यकृच्च रसायने ।
रसायनैरुच्चवेधी ह्रस्ववेधी तथेतरैः ॥२८१॥
उच्चवेधी खसत्त्वेन त्वभ्रजीर्णो भवेद्रसः ।
तस्मात् खस्य प्रवेशं तु सूतके प्रब्रवीम्यहम् ॥२८२॥
पूर्वचूर्णितमभ्रं तु संस्कृतं पुटितं तथा ।
मार्जारपाद्युत्तमाथ काच[क]माची घनारवः ॥२८३॥
वर्षाभूमुनितोयेन पुटितं च यथाक्रमात् ।
नाक्लीबीजरक्तेन उमारक्तफलानि च ॥२८४॥

तत्स्नेहेन किंचिच्चूर्णं भावयित्वा क्रमेण तु ।
ग्रसते तत्क्षणात् सूतोऽभ्रकं नैवात्र संशयः ॥२८५॥

आद्यजेनाथ सर्वेषामेकेनैव तु भावयेत् ।
स्त्रीरजसा समोपेत उमाफलसितैर्युतः ॥२८६॥

तत्स्नेहेन ग्रसेदभ्रमौषधीभिः सुसंस्कृतम् ।
रसायनानि लोहानि धातून् सर्वान् ग्रसेद्रसः ॥२८७॥

द्रव्ये रसायने चैव भवेद्धि सूतको वरः ।
औषधीभिः कृतं वाभ्रमम्लवज्ज्र[र्गे]ण भावितम् ॥२८८॥

सृष्टिवर्गेण तद् भाव्यं पुरन्ध्री या प्रसूतिका ।
गौरी या तद्भवं गृह्य चरत्यभ्रं रसेश्वरः ॥२८९॥

पशूनामेकवर्णानामात्मजेन च भावयेत् ।
तद्वर्णमभ्रकं सूतो ग्रसते चाम्लसंयुतम् ॥२९०॥

रसायनानि सर्वाणि धातूनि ग्रसते क्षणात् ।
द्रव्ये रसायने चैव भवेद्धि सूतको वरः ॥२९१॥

गदामृतामेघनादशतावरीपुनर्नवाः ।
सर्वाङ्गिकास्तु भवजो रसं तासां विगृह्य च ॥२९२॥

खमेलं भावयित्वा तु सर्वं मूषोदरं भवेत् ।
क्षारस्नेहसमायुक्तं खसत्त्वं पतति क्षणात् ॥२९३॥

रसैः सृष्टियुतं चाभ्रमम्लेन तु विमर्दयेत् ।
ग्रसते तत्क्षणात् सूतो भवेच्च नवनीतवत् ॥२९४॥

रसायने भवेन्मुख्यो जारितो वाथ[प्य]जारितः ।
चारणादुच्चवेधानि धावकश्च चरेद्रसः ॥२९५॥

यद्वर्णं चैव लोहं तु सूतकस्य न चारितः [तम्] ।
तद्वर्णमुपयोगि स्याच्छङ्करे मिश्रवर्णकः ॥२९६॥

अजरामरत्वं भवेद् वज्रकायो महाबलः ।
महदग्निमुखं प्राप्य दह्यन्ते सर्व आयसाः ॥२९७॥

सर्वेषां दह्यमानानां गुणास्तिष्ठन्ति हेमगाः ।
एकमेवाक्षयं हेम तेन बद्धो रसोत्तमः ॥२९८॥

रसं युक्तं न चान्यं हि काष्ठमूलीरसायनम् ।
जीवं धारयितुं शक्ताः कालान्तरवशानुगाः ॥२९९॥

तस्माद् वेह रसोपेताः दिव्यौषधिसमाश्रयात् ।
देहजातं समावेद्य[ष्ठ्य] तिष्ठत्यायुस्तथाक्षयः ॥३००॥

दिव्यदेहो नरो भूत्वा क्रीडति क्षितिमण्डले ।
सर्वैश्वर्यगुणोपेतो महाकल्पायुरुत्तमः ॥३०१॥

योगीश्वरपदावाप्तिस्तेन देहेन जायते ।
ज्ञानमासाद्य तेनैव देहेन तु विमुच्यते ॥३०२॥

इत्याद्ये स्वच्छन्दे गोरक्षसंहितायां भूतिप्रकरणे
बीजसम्बन्धाधिकारः[रो नाम]पञ्चमः पटलः



## षष्ठः पटलः

शक्तिरुवाच

वर्णितास्तु पुरा देव मणयो रसबन्धने ।
सूचिता नाममात्रेण न च कर्म प्रकाशितम् ॥ १ ॥

तेषां वीर्यं च जातिं च कर्म चैव वद प्रभो ।

श्रीकण्ठ उवाच

शृणु शक्ते यथा कर्म मणीनां लक्षणं च यत् ॥ २ ॥

महत्पुण्योदये प्राप्तिस्तपसा नान्यथा भवेत् ।
साधनं शम्भुमन्त्राणां प्रसन्नेन शिवेन तु ॥ ३ ॥

तेषां कर्म च शास्त्रार्थः प्राप्ते पुण्योदये भवेत् ।
महद्भूतिप्रदः सूतश्चन्द्रकान्तेन यः कृतिः ॥ ४ ॥

तारकान्तेन वा बद्धो दीर्घमायुःप्रदो भवेत् ।
आग्नेयस्तु मणिश्चान्यो रसबन्धकरो भवेत् ॥ ५ ॥

सूर्यस्य रश्मियोगेन मुञ्चेच्च जातवेदसम् ।
बध्नाति सूतकं क्षिप्रं विधिना नान्यथा हि सः ॥ ६ ॥

नोपयोगे त्वसौ कार्य आग्नेयत्वान्न शोभनः ।
द्रव्यसिद्धिकरः प्रोक्तो विधिना तेन सूतकः ॥ ७ ॥

विधिं तस्य प्रवक्ष्यामि सूर्यकान्तस्य तत्त्वतः ।
तस्य मूषा स्थिरा कार्या कनिष्ठाङ्गुलिमानतः ॥ ८ ॥

कटाहं च भवेत्तस्य खातं तस्य द्विरङ्गुलम् ।
विस्तारो द्विगुणः कार्यस्त्वधः खातस्य चोपरि ॥ ९ ॥

अ[क्र]मेण कारयित्वा तु तीक्ष्णशो[शा]णावघर्षणम् ।
कनिष्ठार्धाङ्गुली चैव तस्यान्ते खातमेव तु ॥ १० ॥
तत्प्रमाणं विधानं तु कृत्वा तत्सन्धियोजनम् ।
विलिप्य ध्वांक्षविष्ठाभिर्देवीगुञ्जासटङ्कणैः ॥ ११ ॥
शृङ्गीविषेण संयुक्तं स्त्रीस्तन्येन तु पेषयेत् ।
तत्र सूतस्तु दातव्यो हेमाष्टांशनियोजितः ॥ १२ ॥
दद्याद्वलिवसां तत्र अनेन तु समीकृतम् ।
क्रियमाणां वलिवसां शृणुष्वैतां यथाव[र्थ]तः ॥ १३ ॥
गन्धर्वतैलद्रवितं गन्धकं तु सुचूर्णितम् ।
उन्मत्तरससंसिक्तं भावयित्वा पुनः पुनः ॥ १४ ॥
पक्षच्छेदोक्तयोगेन संयुक्तं कारयेद् बुधः ।
स्त्रीणां रजसा संभाव्य शोषयित्वा यथाव[र्थ]तः ॥ १५ ॥
गृहीतं नीलवस्त्रेण स्त्रीस्तन्येन तु गालितम् ।
अथवा तद्रजो ग्रासं लोहपात्रे शुभं भवेत् ॥ १६ ॥
शुक्रेण तु नराणां हि भावयित्वा यथाव[र्थ]तः ।
भेकमत्स्यवसा या तु कर्कटस्य वसाऽथवा ॥ १७ ॥
भाव्यमेभिः क्रमाद् गन्धं शिशुमारवसापि वा ।
एषा वलिवसा तु स्यात् सूतकस्य निबन्धिनी ॥ १८ ॥
रञ्जनं चैव कुरुते मणिमूषाविधिक्रमे ।
एषा वलिवसा नाम क्षणाद् बध्नाति सूतकम् ॥ १९ ॥
जोतिष्मतीपलाशानां तैलेऽपामार्गसंभवे ।
चन्द्रलेखोद्भवे तैले उन्मत्तोत्थेन भावयेत् ॥ २० ॥
अङ्कोलजेन तैलेन भाव्या वलिवसा भवेत् ।
भावयेदभ्रचूर्णं तु गन्धकं तु समीकृतम् ॥ २१ ॥

ततस्तु बीजभागेन दत्त्वा तत्सूतकोपरि ।
तच्चं पिधाय मणिना तुत्थमध्ये निधापयेत् ॥ २२ ॥
पार्थिवे वज्रतुत्थे तु नैव तं स्वेदयन्मणिम् ।
ष[तु]षाग्नौ दापयेद्दैतामर्कतीव्रं सुतापिताम् ॥ २३ ॥
द्रवेद्बलिवसा सा तु अभ्रयुक्ता बलीयसी ।
क्षणाद्धि प्रविशेत् सूतो रज्यते जरति क्षणात् ॥ २४ ॥
सप्ताहादग्निमध्यस्थो ध्मातः सूतो न नश्यति ।
इन्द्रायुधसमः श्रीमान् सृजन् वै रश्मिमण्डलम् ॥ २५ ॥
सारयेत्तत्क्षणादेव वर्णं तैलस्य मध्यगम् ।
उक्ततैलेन वा युक्तं सारयेद्दीर्घमूषगम् ॥ २६ ॥
रसोपरसयुक्तेन समहेम्ना तु सारयेत् ।
ताराविष्टं शतांशेन तारं वा बध्यते रसः ॥ २७ ॥
आदिबीजं शतांशेन दत्त्वा बीजं तु चोत्तरम् ।
शतेन जायते हेम कूष्माण्डकुसुमप्रभम् ॥ २८ ॥
अनेन विधिना सूतं कृत्वा उत्तरचारणात् ।
द्विसप्ताहात्त्रिसप्ताहाच्चतुः पञ्च तथापि वा ॥ २९ ॥
षट् सप्त क्रमसंचीर्णो द्विमासं वा मणिस्थितः ।
उत्तरोत्तरवेधी स्यात् कोटिवेधो भवेद्रसः ॥ ३० ॥
रसैश्चोपरसैश्चैव सर्वलोहानि मारयेत् ।
भावयित्वा यथा गन्धं चारयेदुत्तरोत्तरम् ॥ ३१ ॥
अनेनैव तु योगेन मासाच्चारणजारणात् ।
गन्धकेन समायुक्तो गन्धहेम तु गन्धकम् ॥ ३२ ॥
चारयित्वा विधानेन रञ्जयित्वा तु सारयेत् ।
कोटिवेधी भवेत् सूतस्तारे ताम्रे भुजङ्गमे ॥ ३३ ॥

जाम्बूनदं भवेद्दिव्यं द्वेधा त्रेधा तु वेधितम् ।
मणिमूषाविधानं तु कर्मकालेषु कारयेत ॥ ३४ ॥

वर्जयेत् पुष्पमासं तु आद्यं भाद्रपदं तथा ।
श्रावणं तु तथान्येषु कर्म कुर्याद्विधानतः ॥ ३५ ॥

मणिमूषाविधानं तु रहस्यं च प्रकाशितम् ।
चन्द्रकान्तेन मणिना बध्यते सूतकः क्षणात् ॥ ३६ ॥

अमृतोपमो भवेद्दिव्यस्त्वमृतात् पूर्वमुत्थितः ।
सोमवीर्यो महापुण्यो मृत्युघ्नो नात्र संशयः ॥ ३७ ॥

चन्द्रोदये जलं मुञ्चेत्सोमरश्मिनियोजितः ।
तज्जलं सर्वजे युक्तं जरामृत्युविनाशन् [नम्] ॥ ३८ ॥

तत्पीत्वा तु जनो नित्यममरत्वमवाप्नुयात् ।
दाहज्वरं विषं शूलं नश्यन्ति व्याधयः क्षणात् ॥ ३९ ॥

स मणिस्तत्क्षणादेव सूतं गृह्णाति तत्त्वतः ।
हेमतारसमायुक्तां कुर्याद्बिन्दुसमं ततः ॥ ४० ॥

हेमतारमयीं दिव्यां प्राकाराट्टालतोरणाम् ।
कर्षेण तस्य युक्तेन त्वमरत्वमवाप्नुयात् ॥ ४१ ॥

अचिन्त्यं तस्य वीर्यं तु यथा योगं तथा शृणु ।
कृत्वा कूर्पमयीं तुत्थां तत्र सूतं विनिक्षिपेत् ॥ ४२ ॥

हेम्नाथ शुद्धतारेण संयुक्तं पादयोगतः ।
दिव्यौषधिकृतो लेपः कर्षाग्नौ तन्निधापयेत् ॥ ४३ ॥

पौर्णमास्यां तु चन्द्रस्य उदये तु नियोजयेत् ।
उत्था[तुत्थो]परि मणिं दद्याद्दिव्यसोमार्कमन्त्रितम् ॥४४॥

दीप्ताघोरेण चामन्त्र्य आत्मबीजेन चाप्यधः ।
सोमस्य रश्मिभिः स्पृष्टो मुञ्चेच स जलामृतम् ॥ ४५ ॥

सूतकोऽत्यग्निसंतप्तो यावत्स्पर्शति[स्पृशति] तज्जलम्।
त्रिपुरादिशतं जप्तां क्षणाद्बन्धमवाप्नुयात् ॥ ४६ ॥

ध्मातो भस्त्रासहस्रेण महानलगतस्तु सः।
तिष्ठति पक्ष एवैष वह्निमध्ये महारसः ॥ ४७ ॥

हेम ते सारयित्वा तु तारेणाथ महारसः।
कोटिवेधी भवत्येष सर्वलोहान्निबन्धति ॥ ४८ ॥

उपयोगेन तस्यैव सिद्धार्थैका दिने दिने।
षण्मासाच्च व्रजत्यूर्ध्वं सदाशिवपुरावधि ॥ ४९ ॥

गच्छत्यखिलभुवनान्य-[नि]वारितविग्रहः।
अथ तारामणिर्दिव्यः स्पर्शात् सूतकबन्धनः ॥ ५० ॥

तारकान्तस्तु विज्ञेयो दिवश्चामृतसंभवः।
तस्य दिव्यस्य पूर्णस्य समुत्पत्तिं तथा शृणु ॥ ५१ ॥

निशार्धे तु पौर्णमास्याः शरद्ग्रीष्म(?)महोदधौ।
शुक्तयस्तत्तटे स्थित्वा ऊष्माणा विवृताननाः ॥ ५२ ॥

समीरणं ताः पिबन्ति पर्जन्यो यदि मुञ्चति।
जलं तद्वक्त्रमध्ये तु गतं तद्भूतिराव्रजेत् ॥ ५३ ॥

तारकान्तस्य दिव्यस्य कालपाशेन वज्रवत्।
काठिन्यं मौक्तिकं लोके तस्य संज्ञा विधीयते ॥ ५४ ॥

स बध्नाति रसं क्षिप्रं धनदं स्पर्धते नरः।
कर्षेणैवोपयुक्तेन यमस्तस्यैव किङ्करः ॥ ५५ ॥

हेमतारेण संयुक्तं सूतकं कारयेद् बुधः।
उक्तमूषोदरे संस्थं कर्षाग्नौ तन्निधापयेत् ॥ ५६ ॥

मुखे तस्य मणिर्देयः पूर्णिमायां (?) निर्हृतः।
त्रिपुरादिहितं मन्त्रं धारयेत् कालयोगतः ॥ ५७ ॥

सोमस्यांशुसमायोगात्तारकातु[न्तोऽ]मृतोपमः ।
बध्नाति स्पर्शनात्सूतः[तं] रञ्जत्यत्र न संशयः ॥ ५८ ॥
महानलसहो ह्येष सारयित्वा महारसम् ।
वेधयेत् सर्वलोहानि कोट्यंशेन महारसः ॥ ५९ ॥
कर्षेणैवोपयुक्तेन विश्वार्धं व्रजति क्षणात् ।
अमरश्च तथा विन्ध्यो यथा रुद्रस्तथैव सः ॥ ६० ॥
उच्येते कर्मसर्वस्वे चपलस्य यथायथम् ।
वङ्गवद् द्रवते बह्नौ च[प]लस्तेन कीर्तितः ॥ ६१ ॥
क्षीयते नापि वह्निस्थः सत्वरूपो महाबलः ।
ईदृशश्चपलो वा स्याद्वादिनां वादकर्मणि ॥ ६२ ॥
वस्त्रेण बद्ध्वा चपलं लङ्घयेद्यदि सागरम् ।
वस्त्रेण वेष्ट्यते सद्यस्तेन तच्चपलो मतः ॥ ६३ ॥
सितः पीतोऽरुणः कृष्ण इति भेदाच्चतुर्विधः ।
चपलेन समः सूतः क्षणेनैव निबद्ध्यते ॥ ६४ ॥
द्रावकेण तु योगेन मूषालेपं तु कारयेत् ।
हेम्नैवाथ च तारेण योजयित्वा महारसम् ॥ ६५ ॥
खदिराग्नावधो धाम्यं तत्क्षणान्मिलति ध्रुवम् ।
चतुर्थांशेन तु तस्य ग्रासं दद्याद्धि साम्लकम् ॥ ६६ ॥
चणकाम्लेन संमर्द्य द्रावकं तु विनिक्षिपेत् ।
कृत्वा गर्भद्रुतिं तस्य धाम्यं मूषागतं हि तत् ॥ ६७ ॥
तत्क्षणाद् बन्धमायाति वज्रौपम्यो न संशयः ।
सारयित्वा समं हेम तारैकशतवेधितम् ॥ ६८ ॥
सहस्रलक्षकोटीभिः कुर्यादेष रसोत्तमः ।
चारणोत्तरयोगेन उच्चवेधी क्रमाद्भवेत् ॥ ६९ ॥

यदा कल्पपलेनैव उपयुक्तेन जीवति ।
अथ वज्रस्य पातेन सूतको बन्धमाप्नुयात् ॥ ७० ॥

विबोध्य हेमताराभ्यां वज्रकन्दरसेन तु ।
ततस्तद्धि न्यसेत् सूतं निर्मले घा[घो]षभाजने ॥ ७१ ॥

समुन्नता यदा मेघा ज्येष्ठाषाढेऽम्बुपूरिताः ।
कार्त्तिके वाश्वयुजि वा नभस्योपरि विन्यसेत् ॥ ७२ ॥

वने वा तरुशाखायां यत्र कश्चिन्न पश्यति ।
आरामशून्यगेहे वा यत्र वज्रं निपातयेत् ॥ ७३ ॥

तडित[त्]घोषप्रिया नित्यं जीमूतस्था क्वचित्क्षणः ।
निष्क्रामवातयोगेन तदावश्यं तु तत्र सा ॥ ७४ ॥

लिप्यते तत्क्षणादेव भस्मतां सन्नयेद्रसम् ।
निपुणं तद्रसं ग्राह्यं वज्रकन्देन लेपिते ॥ ७५ ॥

उत्थाय निक्षिपेत् सूतं तारं हेम च संयुतम् ।
शतांशेन तु तेनैव छादयित्वा तथोपरि ॥ ७६ ॥

अन्धयित्वा धमेद्धीमांस्तद्भस्म तत्क्षणाद्भवेत् ।
पुनः···शतेनैव गोलकः सर्वजो भवेत् ॥ ७७ ॥

हेमतारसमायुक्तः सारयित्वा समं बुधः ।
शतसाहस्रयोगेन लक्षकांशप्रयोगतः ॥ ७८ ॥

वेधयेत् सर्वलोहानि क्रमाद्धेम सितं भवेत् ।
पलोपयोगमात्रेण महाकल्पप्रदो भवेत् ॥ ७९ ॥

रक्ताभ्रस्य ततो वक्ष्ये यथाकर्म व्यवस्थितिम् ।
योगेनैकेन विधिवदर्कं हेम्ना नियोजयेत् ॥ ८० ॥

यथा करोति बन्धं वै सूतकस्य तथा शृणु ।
यात्यम्लसारसंपीतं सिद्धं वन्योपलाग्निना ॥ ८१ ॥

चक्रयोगेन निर्बीजं खखाचूर्णसमायुतम् ।
चाङ्गेरीकोष्ट्रकीरम्भादधित्थदधिवारिणा ॥ ८२ ॥

क्षारमूत्रं त्रिधा पीतं पादटङ्कगुहागतम् ।
वज्रमूषादिक्षि[दी]प्ताग्नौ खादिरे द्वन्द्वतां व्रजेत् ॥ ८३ ॥

खजं वातेन योगेन पतत्यथ निरञ्जनम् ।
खखावशेषितं कृत्वा वापसेकेन निर्दहेत् ॥ ८४ ॥

टङ्कसिन्धुधराकांक्षीरञ्जनीशङ्खयोजनात् ।
रक्तपीतेन तैलेन रक्तं रागेण रञ्जितम् ॥ ८५ ॥

खखं गुरुत्मतां याति रुग्माद्वै मातृकोत्तरम् (?) ।
बलिना रक्ततैलस्य अष्टभागस्य जीवितम् ॥ ८६ ॥

तत्खखं···टके सूते सप्ताहं स्वेदयेन्मनाक् ।
तदारविन्दलेपं तु विश्रामं पुटितं तु तत् ॥ ८७ ॥

वरं संयोज्य लेपेन विश्रामपुटितं ततः ।
लिप्ता[प्तं] गुहागतं ध्मातं त्रिसारं मात्रि[तृ]कोत्तरम् ॥ ८८ ॥

खखाभ्रसमचूर्णं तु हेमाभ्रस्यैव चारणात् ।
सितहिङ्गुधराकांक्षीं सितं कनकटङ्कणम् ॥ ८९ ॥

जलशूकभवक्षारस्त्रिरथं चमनीरसः ।
सोष्मे[ष्णे] संमर्द्य यामं तु गर्भोदरभवो भवेत् ॥ ९० ॥

बलिना वासितं भाव्यं मुहुः क्षारेण सप्तधा ।
दोलाग्निसोमसंचीर्णं विधिनानेन सर्वजम् ॥ ९१ ॥

खजा[खा]भ्रनिर्गते सारे समसारितसर्वजः ।
प्रत्यानुसारेण कार्या (?) जीर्णे समचतुर्गुणः ॥ ९२ ॥

अष्टधा चैव संचीर्णः शतसाहस्रलक्षधा ।
त्रिभागव्यूढं शुल्वं तु क्रमात् काञ्चनतां नयेत् ॥ ९३ ॥

खादेत् संवत्सरं त्वेकं माषनिष्पावरक्तिका।
जरामृत्युविनिर्मुक्तः कल्पायुर्जायते नरः ॥ ९४ ॥

स क्रीडेन्मर्त्यलोके तु दिव्यदेहो यदृच्छया।
खखाभ्रकविधानं तु सरहस्यं प्रकाशितम् ॥ ९५ ॥

गोपायितव्यं यत्नेन दद्याद्वै सव्यकर्मणि।
सस्यकस्याप्यतो वक्ष्ये यथाकर्म व्यवस्थित[ति]म् ॥ ९६ ॥

पूर्वोक्तेन विधानेन पातयित्वा तु सस्यकम्।
रसैश्चोपरसैश्चैव यथा लाभेन वापयेत् ॥ ९७ ॥

रक्ततैले निषेक्तव्यं ततो हेम्ना नियोजयेत्।
द्वन्द्वमेलापकेनैव तद्रसे चारयेद् बुधः ॥ ९८ ॥

गर्भे द्रव्ये ततो जार्यं तेन हेम तु निर्गतम्।
सारयित्वा च मन्त्रेण शतांशेन समं बुधः ॥ ९९ ॥

वेधेन जायते हेम जाम्बूनदसमप्रभम्।
उत्तरोत्तरयोगेन उच्चवेधी महारसः ॥ १०० ॥

महारसायने योग्यो रक्तिमात्रोपयोगतः।
जरामयास्थानमृत्युः षण्मासान्नश्यति ध्रुवम् ॥ १०१ ॥

समेन दिव्यदेहस्तु खेचरैः सह गच्छति।
सस्यकं पतते शोध्यं रागस्नेहेन सेचनात् ॥ १०२ ॥

सितानि कृष्णहेमानि षोडशांशेन भावयेत्।
उत्तमत्वं नयेत्तानि कलानू[न्यू]नान्यवाप्नुयात् ॥ १०३ ॥

सस्यकाश्म च संभाव्य त्वम्लेन तु यथाक्रमात्।
रागस्नेहेन संस्नेहात् पञ्चमांशेन वापयेत् ॥ १०४ ॥
रागस्नेहे निषेक्तव्यं चतुर्गुणगुणोदयम्।
हेमात् कर्षस्त्वयं श्रेष्ठः सस्यकाश्म न संभवेत् ॥ १०५ ॥

तत्समं वाहयेत्तारे रागस्नेहे निषेचयेत् ।
तदर्धमूल्यं भवति हेमार्धेनाष्टकोणकम् ॥ १०६ ॥

तारारिष्टे समं वापि तारशेषं तु कारयेत् ।
तत्पीतं जायते हेम पीतं सोऽष्टकोणकम् (?) ॥ १०७ ॥

सस्यकं पतितं ध्मातमम्लवर्गेण सूतकम् ।
चारयित्वा तु पादेन मध्वाज्येन विमर्दयेत् ॥ १०८ ॥

तेन तारं पुटे पीतं त्रिभिः पीतं तु जायते ।
पीतेन मन्त्रका[मात्रिका] तुल्यं लभते नात्र संशयः ॥ १०९ ॥

तेन शुल्वं पुटं पक्वं क्रमेण च समन्वितम् ।
हेमार्धेन भवेद्धेम सोमार्कं वा पुटं पुटेत् ॥ ११० ॥

हेमार्धार्घे भवेद्धेम रससस्यकयोगतः ।
मध्वाज्येन कृतं कल्पं सस्यकं सूतमेकतः ॥ १११ ॥

मुष्टिस्त्रया वला शून्यं मेघनादरसं तथा ।
मुनिपुष्प[-रसं] चैव तेन मर्द्यं दिने दिने ॥ ११२ ॥

माषकं प्राशयेन्मन्त्री दीप्तबीजादिभिर्बुधः ।
कामदेववपुः श्रीमान् पद्मगर्भोपमं वपुः ॥ ११३ ॥

जरामयविनिर्मुक्तः षण्मासाज्जीवितायुतः ।
महाकल्पसमेनैव सम्यक् सूतकयोगतः ॥ ११४ ॥

चारणाज्जारणान्तेन[त्तेन] पद्मरागोपमो भवेत् ।
सूतको हेमकारी स्याद्धेमयुक्तस्तु सारितः ॥ ११५ ॥

तारारविन्दारेभ्योऽथ शतभेदी[बेधी] महारसः ।
उत्तरोत्तरयोगेन उत्तरोत्तरवेधकृत् ॥ ११६ ॥

तस्योपयोगे दीर्घायुः खेचरत्वमवाप्नुयात् ।
अथादिकस्य वक्ष्यामि यथाकर्म क्रमं शृणु ॥ ११७ ॥

पतितमग्नितापेन पीतरक्तासितं तु तत् ।
तद्धेमयुक्तं सूते तु जारयेच्च समं बुधः ॥ ११८ ॥
रसैश्चोपरसैश्चैव यथालाभेन चाम्लजैः ।
स्नेहैस्तैर्वापयेत् पूर्वं रागस्नेहे निषेचयेत् ॥ ११९ ॥
तेन बद्धो रसः श्रीमान् भवेदिन्द्रायुधोपमः ।
शैलेन निर्गतं हेम सारयित्वा समं बुधः ॥ १२० ॥
चतुष्पष्टिगुणं तारं ताम्रारं वाऽथ हेमकृत् ।
तद्विद्धं शतवेधी स्याच्चतुर्धा तु सहस्रधा ॥ १२१ ॥
अष्टधा लक्षवेधी स्यात्षोडशात्कोटिवेधतः ।
रसायने भवेच्छ्रेष्ठो महाकल्पायुर्दो रसः ॥ १२२ ॥
सितं सितेन वर्गेण शुष्कवर्गे रसैर्वपेत् ।
संधाने तु सिते सव्यं त्रिगुणं तारयोषि[जि] तम् ॥ १२३ ॥
संकरं चारयेदादौ पश्चाच्चार्यं तु निर्गतम् ।
सारणान्तो भवेत् सूतश्चतुःषष्टिप्रवेधकः ॥ १२४ ॥
उच्चवेधी क्रमेणोक्तो वंगघोषारकार्त्तवे ।
नियुक्तस्तारकृत्सूतो महद्भूतिप्रदायकः ॥ १२५ ॥
विमलस्य यथा कर्म पूर्वशुद्धस्य कथ्यते ।
पटुक्षारैस्तु संभाव्य ततोऽम्लैस्ते[तैः]हि भावयेत् ॥ १२६ ॥
रागाम्ले हेम संस्नेह्य स्त्रीरेतोभिर्विभावयेत् ।
हेम्ना तु त्रिगुणं वाह्यं तद्धेम चारयेद्रसे ॥ १२७ ॥
समेन जायते सूतो द्वात्रिंशद्गुणवेधकः ।
तारे[रा]रेन्दीवरं चैव त्रिकूटं वाऽथ वेधयेत् ॥ १२८ ॥
त[द्]द्विधा चारयित्वा तु रसश्च शतवेधकः ।
उच्चवेधी क्रमाज्ज्ञेय उपयुक्तो रसायने ॥ १२९ ॥

महदायुःप्रदो ह्येष पलादूर्ध्वं महारसः ।
तेनैव मलवापेन त्रिगुणेन सितं बुधः ॥ १३० ॥

रञ्जितं संचितं स्नेहे हेमार्धार्धेन तूत्तमम् ।
मातृकोनं भवेत्किञ्चित् कुरण्टकुसुमोपमम् ॥ १३१ ॥

तारे आरं तु निर्वाह्य त्रिगुणागुणवापितम् ।
रक्तस्नेहे निषिक्तं तु पीतसारं तु तद्भवेत् ॥ १३२ ॥

हेमार्द्धा[र्धं] तु भवेद्धेम मातृकोनं तु किञ्चन ।
तीक्ष्णनागरशुल्वानि विमलेन तु घातयेत् ॥ १३३ ॥

अम्लेन तु सुपिष्टेन तारे निर्वाह्य तद्रजः ।
त्रिगुणं षोडशांशेन वाप्येण तु नियोजतेत् ॥ १३४ ॥

रक्तस्नेहे निषिक्तं च पीतसारं तु यद्भवेत् ।
हेमार्धं जायते हेम कूष्माण्डकुसुमप्रभम् ॥ १३५ ॥

पूर्वशुद्धनगं द्रव्ये क्षारं तुषागतं तु तत् ।
विमलेन तु तद्वाप्य यावत्किंशुकसप्रभम् ॥ १३६ ॥

तारार्कत्रिगुणं व्यूढं रक्तस्नेहे निषेचयेत् ।
हेमार्धं योजितं हेम मातृकोनं विधीयते ॥ १३७ ॥

हेमोत्थचूर्णं संग्राह्याम्लवर्गेण यथाक्रमात् ।
सृष्टित्रयेण संयुक्तमम्लैस्तु चारयेत्क्रमात् ॥ १३८ ॥

सारयित्वा क्रमेणैव समहेमविनिर्गतम् ।
हेमार्धयोजितं हेम पीतसारं विधीयते ॥ १३९ ॥

विमलेनाम्लपिष्टेन तारपत्राणि लेपयेत् ।
पुटपाककृतं चूर्णं गन्धकेन समं कुरु ॥ १४० ॥

तेनैव चाम्लपिष्टेन शुल्वपत्राणि लेपयेत् ।
पुटपाककृतं चूर्णं दरदेन समं कुरु ॥ १४१ ॥

अम्लपिष्टेन तेनैव तीक्ष्णपत्राणि लेपयेत् ।
पुटपाककृतं चूर्णं मध्वाज्येन तु भावयेत् ॥ १४२ ॥

पक्षच्छेदकरेणैव योगेन तु समायुतम् ।
अन्धमूषाकृतं ध्मातं यत्सारं तत्र तिष्ठति ॥ १४३ ॥

हेमतारं तथा शुल्वं रक्तस्नेहे निषेचितम् ।
निबिडं निर्मलं पीतं मृदु यत्तत्र निर्गतम् ॥ १४४ ॥

हेमार्धयोजितं हेम पीतसारं तु शोभनम् ।
हेमान्त (?) चूर्णं संगृह्य त्वम्लैर्भाव्यं यथाक्रमात् ॥ १४५ ॥

सृष्टित्रयेण संयुक्तमम्लैस्तच्चारयेद्रसे ।
जारयित्वा क्रमेणैव समैर्हेमविनिर्गतम् ॥ १४६ ॥

समात्समं सारयेत्तु शतवेधी भवेद्रसः ।
तारारेन्दीवरे चैव त्रिकूटं चापि वेधयेत् ॥ १४७ ॥

तारं वाऽथ विशेषेण स्वर्णं भवति शोधनम् ।
क्रमोत्तरविधानेन शतसाहस्रवेधकः ॥ १४८ ॥

विमलस्तु रसो दिव्यस्तारचूर्णविवर्जितः ।
मृतलोहरजो योज्यस्समस्त्वम्लैः सुभावितः ॥ १४९ ॥

क[क्रा]मणेन समायुक्ता रक्तस्नेहेन भावयेत् ।
व्यापयेच्च समतारे शुल्वैरेवाऽथ वापयेत् ॥ १५० ॥

रक्तस्नेहे निषेकेण पीतसारा भवन्त्विमे ।
हेमांशयु [क्त्या] स्वर्णं तु कुरुते नात्र संशयः ॥ १५१ ॥

षडायसरजः सूते चारयित्वाम्लितं क्रमात् ।
यावत्पिण्डत्वमायाति बिडगर्भाम्लसेवितम् ॥ १५२ ॥

ग्रावपात्रे तु निहितं धान्यमध्ये निधापयेत् ।
षण्मासाद्बन्धमायाति महदग्निसहो भवेत् ॥ १५३ ॥

लवणक्षारोपरसै रसैरम्लैर्विडं मतम्[विडो मतः] ।
समे गर्मे तु संस्थाप्य[ः] येन च[सो]द्रवीभवेत् ॥ १५४ ॥
तेनैव तु शतांशेन तारारिष्टं तु वेधयेत् ।
प्रच्छाद्य लि[ति]लचूर्णेन सप्ताहं क्षितौ निखनेत् ॥ १५५ ॥
तद्धेम जायते दिव्यं शतांशेन तु मेलयेत् ।
तेन शु[सु]तेन तारं तु शुल्वं वा यत्र लेपितम् ॥ १५६ ॥
सप्ताहं निष[ख]नेद् भूमौ अन्धयित्वा धमेत्ततः ।
तद्धेम जायते दिव्यं शतांशे हेमयोजितात् ॥ १५७ ॥
षडायसरजोभिस्तु सूतकमभ्रचारितम् ।
समेन समतुल्यस्तु अम्लवर्गेण मर्दयेत् ॥ १५८ ॥
लवणक्षारोपरसैः रसैः संयोज्य चाश्मजे ।
पात्रे संस्थाप्य पिधाय षण्मासन्यासयोगतः ॥ १५९ ॥
कल्पवेधी भवेदेष पत्रलेपेन योजितः ।
तारे शुल्वे तु विश्राम्य क्षिप्तौ[तौ] सप्ताहमन्धगम् ॥ १६० ॥
विश्रान्तं जायते हेम शतांशेन तु शोभनम् ।
विमलं त्वार्त्तवे वासं त्रिगुणमम्लभावितम् ॥ १६१ ॥
स्नेहितं रागयोगेन तदुत्कर्षकरं भवेत् ।
दशांशेन सितं हेम पीत[तं च]षोडश [शांशकैः] ॥ १६२ ॥
तच्छुल्वं चारयेत्सूते स महाग्निसहो भवेत् ।
द्विगुणेन तु रञ्येत निष्क्रान्तं तेन काटकः ॥ १६३ ॥
सारयेच्च समं पश्चाच्छतवेधी भवेद्रसः ।
शुल्वे तारे च निक्षिप्तौ[प्तो] बीजयोगे शतेन तु ॥ १६४ ॥
पीतसारं भवेद्धेम सर्वकर्मसु शोभनम् ।
तेनोपयुक्तमात्रेण माक्षिकेण दिने दिने ॥ १६५ ॥

षण्मासान्येव वृद्धोऽपि त्वष्टवर्षो भवेन्नरः ।
समायुक्तो भवेदायुरुत्तरोत्तरयोगतः ॥ १६६ ॥

उत्तरोत्तरवेधेन हेमकारी रसायने ।
अमरत्वप्रदो ह्येष विमलेन कृतो रसः ॥ १६७ ॥

सितं तच्छुल्वयोगेन त्रिधा तारे क्षिपेद् बुधः ।
वङ्गे तच्च त्रिधा नीत्वा द्वन्द्वं न च प्रवाहयेत् ॥ १६८ ॥

तद्वेद्यश्च वर्गेण शुल्वमावर्त्य वेधयेत् ।
दशांशेन त्रिवारं हि सितसन्धानसेवितम् ॥ १६९ ॥

सितपादेन तारं तु शङ्खकुन्देन्दुसप्रभम् ।
पीताम्ल(?)नृपावर्तं हरिद्राख्यं सतुत्थकम् ॥ १७० ॥

शुद्धानि भावयेदम्लौ रक्तस्नेहेन भावयेत् ।
क्रमेण (?) तु योगेन योजयित्वारुणे वपेत् ॥ १७१ ॥

समानि रञ्जयेत् स्नेहे सेचयित्वा मुहुर्मुहुः ।
उद्भवेत् काञ्चनं पीतं हेमं पादेन शोभितम् ॥ १७२ ॥

तारे वाऽथ समं नीत्वा कूष्माण्डकुसुमोपमम् ।
तद्धेमपादसंयुक्तं भवेद्धेम सुशोभनम् ॥ १७३ ॥

विमलं च शिलाधातु रक्तपीतं तु तद्भवेत् ।
तेनाम्लस्नेहयुक्तेन वापयेच्च सितारुणम् ॥ १७४ ॥

समेन जायते हेम पादच्चारेण शोभनम् ।
सितामलाञ्जनं तारं श्यामकासीससंयुतम् ॥ १७५ ॥

सितं शिलाजतु दद्यादम्लस्नेहेन भावयेत् ।
पक्षच्छेदेन संयोज्य चारविन्दं दशांशतः ॥ १७६ ॥

वेधयेच्च त्रिधा सेच्य शुक्तसंधानवापिते ।
चतुर्थांशेन तारं स्याद[द्]धिसारसमप्रभम् ॥ १७७ ॥

रसहीनाः क्षया योगा न क्रामन्ति मलिम्लुचे ।
समले तु यथा वस्त्रे नैव वर्णः प्रकाशते ॥ १७८ ॥

ताराविन्दे समले तथा रागो न चोत्कटः ।
क्षारतां च भवेच्छुद्धिः सर्वकर्मसु योजयेत् ॥ १७९ ॥

श्यामा कासीससंयुक्ता गाराक्षारपट्टनि च ।
यथा लाभेन चाम्लेन भावयित्वा तु वेधयेत् ॥ १८० ॥

मुनिसंख्याकलांशेन तत्रा (?) वनिषेचयेत् ।
सितपीतैस्ततो योगै[ -र्वे ]धयेल्लेपयेदथ ॥ १८१ ॥

तारं हेमत्वमायाति त्वन्यथा न कथञ्चन ।
एवं ज्ञात्वा तु विधिवत्ततः कर्म [च] कारयेत् ॥ १८२ ॥

माक्षिकस्य प्रवक्ष्यामि यथाकर्म क्रमं शृणु ।
पूर्वोक्तलक्षणैर्गृह्य यथोक्तेन तु शोधयेत् ॥ १८३ ॥

हाटकाभं तु संगृह्य क्षाराम्लस्नेहभावितम् ।
सूतं तं निक्षिपेत्तत्तु त्वधश्छेदे समन्विते ॥ १८४ ॥

मध्वाज्यं क्रामणं योगं कृत्वा तप्तायसे गतम् ।
अधोयन्त्रगतं वाऽथ सवृत्तस्याथ[न्ध]मूषया ॥ १८५ ॥

पतितं धारयेत्तत्र तप्तमूषां तु घट्टयेत् ।
वंशकाष्ठपुराणेन सत्त्वं मुञ्चति तत्क्षणात् ॥ १८६ ॥

षु[सु]रदालीभवं भस्म त्वजामूत्रेण गालयेत् ।
माक्षिकं भावयेत्तेन बहुशः सूर्यशोषितम् ॥ १८७ ॥

चणकाम्लेन तद्भाव्य क्षारस्नेहेन भावयेत् ।
कटुतैलेन वा भाव्य तुल्ये तु ज्वलिते क्षिपेत् ॥ १८८ ॥

तस्य [वै] तत्क्षणात्सत्त्वं धारयेन्मधुसर्पिषि[षी] ।
हाटकेन समायुक्तं तद्रसे चारयेत् समम् ॥ १८९ ॥

द्वन्द्वेनोर्ध्वगतं योज्यं चारयेज्जा[र]येत्ततः ।
तेन व्यूढं समं हेम सारयेत्तेन सूतकम् ॥ १९० ॥

चन्द्रार्कपत्रलेपेन सारितं सूतकं ततः ।
लेपयोग्यं तु तत्कृत्वा क्रामणेन समायुतम् ॥ १९१ ॥

रसं क्षितौ प्रसुप्तं च सप्ताहमन्धमूषितम् ।
घातं(?)तु शतभागेन हेम्ना(?) चैवोत्तमं भवेत् ॥ १९२ ॥

मध्वाज्ययुक्तं तत्सजं (?) माषकं तद्दिने दिने ।
खादेदात्मसमायोगे त्वग्नीषोमीयमन्त्रितम् ॥ १९३ ॥

क्रमेण सर्वदेहेषु दोषान् ग्राह्यवपुर्भवेत् ।
देहेऽग्निमध्ये व्रजति तेन युक्तो बली भवेत् ॥ १९४ ॥

आत्मानेन समायोगान्निर्वाणत्वप्रदो भवेत् ।
जरारुजं तथा मृत्युं सप्तसप्ताहतो भवे[जयं]त् ॥ १९५ ॥

धातुवृद्धिप्रदो ह्येष नित्यं भवति सूतकः ।
बलि[ल]पुष्टिप्रदो नित्यं संपूर्णः सोमवद्भवेत् ॥ १९६ ॥

अतिशुक्रोद्भवो ह्येष कामदर्पकरो भवेत् ।
माक्षीकधातुहेम्ना तु सर्वजस्तु कृतो महत् ॥ १९७ ॥

कल्पायुदोर्ध्वकेनैव दिव्यदेहकरो भवेत् ।
उत्तरोत्तरयोगेन त्वनेन विधिना कृतः ॥ १९८ ॥

सहस्रलक्षधा त्वेष कोटिवेधी भवेद्रसः ।
रसायनोपयोगेनोत्तरोत्तरफलो भवेत् ॥ १९९ ॥

महाकल्पायुषो भूत्वा महाबलपराक्रमः ।
स तिष्ठन्मृत्युलोके तु दिव्यादिव्यैधा[रवा]धितः ॥ २०० ॥

माक्षीकरससंशुद्धं कृतमुक्तविधानतः ।
शिलाजतु समं योग्य[ज्य] ह्यम्लस्नेहेन भावयेत् ॥ २०१ ॥

क्रामणेन समायुक्तं तत्त्रिधा हाटवै[कै]र्वपेत् ।
रक्तस्नेहनिषेकेन तत्त्रिव्यूढं च चूर्णयेत् ॥ २०२ ॥

चणकाम्लादिभिर्भाव्य तद्रसे चारयेत् समम् ।
तेनैव निर्मितं हेम तेन तत्सारयेद्रसम् ॥ २०३ ॥

त्रिकूटं लेपयेत्तेन क्रामणेन तु मर्दितम् ।
तारारिष्टारविन्दां वा तारं वा स्थापयेत्क्षितौ ॥ २०४ ॥

त्रिदिनं तद्गुरुध्मातं शतांशार्द्धमनुत्तमम् ।
तदोपयोगं कर्तव्यं फलोक्तमधिकं भवेत् ॥ २०५ ॥

उत्तरोत्तरयोगेन लेपात्क्षेपेण सूतकः ।
त्रिकूटं वेधयेदेष एकैकं च महारसः ॥ २०६ ॥

उरगं वाऽथ संद्रव्ये क्रामणेन समायुतम् ।
धर्म कर्म बलं ज्ञात्वा सत[प्त]सप्ताहवेधकः ॥ २०७ ॥

जाम्बूनदं भवेद्द्रव्यं तारे वेधा अवेधकः ।
रसायनोपयोगेन उत्तरोत्तरफलप्रदः ॥ २०८ ॥

उक्ताङ्गुलीयकं श्रेष्ठं तन्मध्ये त्वसितं घनम् ।
रसे रसायने चैव उक्तं श्रेष्ठं गुणावहम् ॥ २०९ ॥

शोध्यं संस्कृत्य विधिवत् क्षाराम्लस्नेहभावितः ।
तेनैव वाहयेद्धेम समं वा चार्य सूतके ॥ २१० ॥

उक्तकर्मविधानेन विशेषोऽयमुदाहृतः ।
तद्धेम पादतो दद्यात् सूतकस्याम्लमर्दनात् ॥ २११ ॥

पूर्वशुद्धस्य दीप्तस्य पासि[शि]तस्य नियोजयेत् ।
शुल्वारनागवङ्गानि तीक्ष्णहेमपुटे पचेत् ॥ २१२ ॥

माक्षिकेन[ण] कृतेनैव तच्चूर्णमम्लभावितम् ।
शिलाजतु बलि (?) कासी क्षारा पटूनि च ॥ २१३ ॥

समभागानि सर्वाणि माक्षिकार्धगुणं भवेत् ।
क्षाराम्लपेषितं सम्यक् सितमाठरयोजितम् ॥२१४॥
कतमानि सुपिष्टानि वध्या[न्ध्या] वज्रं च कञ्चुकी ।
सुरदालीरसं दद्यान्मोदयित्वा तु शोषितम् ॥२१५॥
क्षाराम्लयोजितं पश्चात्कान्तग्रावावटे क्षिपेत् ।
पिधाय तेन तद्वह्नौ व[-ह्न्य]धो वा क्षितौ न्यसेत् ॥२१६॥
उद्धरेत् सप्तसप्ताहात् पूजयित्वा शिवं तथा ।
उद्धारयेद् द्रुतं पश्चादिन्द्रायुधसमप्रभम् ॥२१७॥
मुञ्चत्यर्चिःसहस्राणि सूर्यांशुस्पर्शने रसः ।
भागं [शतां-]शतो विन्धेत् भवेज्जाम्बूनदं शुभम् ॥२१८॥
तेन तारं शतांशेन रुक्मं भवति शोभनम् ।
खखारे वा शतांशेन स रसः शतवेधनः ॥२१९॥
वङ्गनागविनिर्मुक्तो यदात्वें गोरसस्य तु ।
द्रुतस्य मासमेकं च मध्वाज्येन तु लेहयेत् ॥२२०॥
पद्मगर्भोपमो देही महाकल्पान्तजीवितः ।
जराव्याधिविनिर्मुक्तो महाबलपराक्रमः ॥२२१॥
कुमारसदृशः सिद्धो रसेनानेन जायते ।
कदम्बसो[गो]लकं पीतं कारवेल्लमथापि वा ॥२२२॥
अथाङ्गुलीयकं श्रेष्ठं शुद्धं क्षाराम्लभावितम् ।
स्नेहितं निर्वपेन्नागे शुद्धं तु त्रिगुणं बुधः ॥२२३॥
तद्वाहयेत् समं शुल्वे तारारैर्वा त्रुटिःक्रमात् ।
रक्तस्नेहे निषेकेण धातुशेषः क्षयं गतः ॥२२४॥
षोडशांशादिबीजं तु तदद्धात्स्वर्णमुत्तमम् ।
कृष्णताप[र]स्य हेम्नस्तु भवेन्मातृसमं शुभम् ॥२२५॥

उत्तरोत्तरकालेन षण्मासावधिसंस्थितम् ।
कालीक[लिमा]रहितं हेम मातृकोत्तरतां व्रजेत् ॥२२६॥
माक्षिकस्य रजः शुद्धं सप्ताहं तु बलारसे ।
महारक्तेऽथवा स्थाप्य शोष्याम्लस्नेहनेन तु ॥२२७॥
शुल्वपत्रं पुटे पक्वं मध्वाज्येन तु तद्रजः ।
क्रामणेन भवेदन्यत् [तत्पीतं] स्वर्णमुत्तमम् ॥२२८॥
अर्धेन मातृकातुल्यं कृष्णतारं विधीयते ।
उत्तारे तु सितं व्यूढं द्वादशार्धगुणोदयम् ॥२२९॥
षोडशार्धं द्विधा ज्ञेयं त्रिधा द्वादशवर्णकम् ।
ज्ञात्वा संयोजयेद्धेम तद्धेम तु यथा यथा ॥२३०॥*
रजादिभिः कृतं शुद्धं तारारेन्दीवरे भवेत् ।
तारारेन्दीवरे तत्र धातुदोषविनिर्गतम् ॥२३१॥
रक्तस्नेहे निषिक्तं तु हेमार्द्धार्द्धे[धर्ध] मनुत्तमम् ।
यं नागं वापितं तेन त्वम्लस्नेहेन वापितम् ॥२३२॥
तारारेन्दीवरे व्यूढं पृथक् पृथगग्नियोगे[ग]तः ।
पीतसाराणि भवन्ति हेमार्धार्धेन[द्धेम]तां व्रजेत् ॥२३३॥
अथवा निक्षिपेत्तारे रक्तस्नेहे निषेचनात् ।
कूष्माण्डपुष्पसदृशं तद्भवेत्पादयोजितम् ॥२३४॥
हेम्ना तु हेमतां याति कर्तव्यं भूतिसाधने ।
कदम्बगोलकाकारं पि[वि]ल्वाकारमथापि वा ॥२३५॥
सितं सिते तु वर्गेण संस्कृतं वाय[प]येद् द्विधा ।
चूर्णयित्वाम्लवर्गेण यथालाभेन भावयेत् ॥२३६॥
शुक्लवर्गेण तद्भाव्यं दशांशाद्वेधयेत् खगम् ।
त्रीन्वारांश्च निषेक्तव्यं शुल्वसन्धानतोऽम्लिते ॥२३७॥

---

* अस्मत्संग्रहालये एतावानेवांशो वर्ततेऽस्य ग्रन्थस्य, अतः परं समाप्तिपर्यन्तोंऽशः श्रीमतां काशिराजमहाभागानामनुज्ञया तदीय "सरस्वती-भण्डार"स्थ ग्रन्थत उद्धृत्य दीयते ।—संपादकः

सितं सिताद्धाद् भवति शङ्खकुन्देन्दुसप्रभम् ।
पट्ुक्षाराम्लयुक्तास्तु तेनादौ क्षालयेत् खगम् ॥२३८॥
अथ तैः संयुतं कल्कं वेधकाले नियोजयेत् ।
एवं शुद्धिमुपायाति सिते पीते च कर्मणि ॥२३९॥
अथ वङ्गे तु निर्वाह्य शैलयुक्तं त्रिधा बुधः ।
पट्ुक्षाराम्लयुक्तं तु दशांशाद्वेधयेत्खख[ग]म् ॥२४०॥
त्रिधा निषेचयेच्छुल्वं संधाने धातुवर्जितः ।
सितार्धाज्जायते तारं दधिसारसमप्रभम् ॥२४१॥
ताराद्रिजं तथा वङ्गं सितमाक्षिकवापितम् ।
पट्ुक्षारसितैश्चैव अम्लवर्गेण संयुतैः ॥२४२॥
त्रिगुणं वापयित्वा तु तद्रसश्चाम्लभावितम् (तः) ।
चारयेत् सूतके तं तु समं तारावशेषितम् ॥२४३॥
सारयेत्तेन तत्सूतं चतुःषष्टिगुणे[णं] खखम् ।
आराघोषं तथा वङ्गं तारतां नयति क्षणात् ॥२४४॥
शतवेधी द्विधा चार्यः पञ्चधा तु सहस्रकः ।
दशधा लक्षवेधी स्याद्विंशधा कोटिवेधकः ॥२४५॥
वङ्गहीनो यदा वद्धस्तदा श्रेष्ठो रसायने ।
माषकं तु शतादूर्ध्वं निष्कायं तु सहस्रके ॥२४६॥
रक्तिकां लक्षके खादेत् सर्षपं कोटिवेधिनि ।
अब्दाद्दिव्यमवाप्नोति जरामृत्युविवर्जितः ॥२४७॥
सोमवर्णो [भवे]त् सिद्धो महाकल्पायुरुच्चलः ।
उक्तक्रमेण विधिवच्चारयेदुत्तरोत्तरम् ॥२४८॥
रसे रसायने चैवाधिकाधिकफलं भवेत् ।
भूतिरायुर्बलं चैव खेचरत्वादिमाक्षिमान्[णिमादिकान्] ॥२४९॥

गुणान् संप्राप्य विधिवत् ज्ञानमासाद्य मुक्तिभाक् ।
रसकस्याथ वक्ष्यामि यथाकर्म विधिं शृणु ॥२५०॥

शोभनस्तु समाख्यातः पीतवर्णो मृदुश्च यः ।
यं स्त्रियास्तु प्रसूतायाः पुष्पकाले तदम्बुना ॥२५१॥

स्थाययेत् प्लवयेत्शं[शृं]गे सप्ताहं भूमिमध्यतः ।
ततो निर्गाल्य तन्मूत्रं शोषयित्वा तु बुद्धिमान् ॥२५२॥

ततः स्त्रीरजसा भाव्यं रक्तवर्गेण भावयेत् ।
पीतवर्गेण संयुक्तमम्लवेतसभावितम् ॥२५३॥

सप्तधा सूर्यतापात्तं क्षारक्षारपटुर्युतम् ।
समं तेन वपेद्धेम तद्रसे पादयोजितम् ॥२५४॥

रसकस्य चतुर्थांशं योजयित्वा च सूतकम् ।
शिशुमारवसायुक्तं मर्दयित्वा यथार्थतः ॥२५५॥

गोशृङ्गे निहितं खेट्टां[खोट्टं] सप्ताहं चक्रवह्निना ।
शिशुमारवसाभाव्यं तुरकस्नेहभावितम् ॥२५६॥

मत्स्याद्यंबुवसांचाथ एकां संगृह्य निक्षिपेत् ।
तारारिष्टस्य पत्राणि पुटपाकेन पाचयेद् ॥२५७॥

सप्तवारं ततो धाम्य ज्योतिष्मत्या निषेचयेत् ।
स्वेदयेद्वाथ तेनैव तत्रैव च निषेचयेत् ॥२५८॥

अर्द्धेन कांचनं दिव्यं योगोपकरणे हितम् ।
साधकः साधनविधौ निर्द्वन्द्वस्तु प्रसाधयेत् ॥२५९॥

अथ पातनयोगेण[न] तस्य सत्त्वं निपातयेत् ।
क्षाराम्लपटुभिर्युक्तं चतुर्थांशेन योजयेत् ॥२६०॥

सोभांजनकमूलोत्थं रसं तु सुरदालिजम् ।
पीडयित्वा च विधिवत् वटकीकृत्य शोषितम् ॥२६१॥

कोष्ठके धाम्य रसकं पतेद्वै महदग्निना ।
सत्वं तु तेन भल्लातकसंयुक्तं हेम चाधि[रि]तम् ॥२६२॥
समं द्वन्द्वविधानेन चारमम्लेन सूतके ।
जारयित्वा समं तेन निर्गतं हेम सारितम् ॥२६३॥
तारारिष्टं शतांशेन तारं वारविनिर्गतम् ।
के[को]मलं हेमकलायुक्तं [तेनैव] वेधयेद् बुधः ॥ २६४॥
कलया हेमसंयुक्तं भवेद्धेम सुशोभनम् ।
योगोपकरणं ह्येतन्मन्त्राराधनकर्म्मणि ॥२६५॥
चतुर्द्धा सप्तधा चैव जीर्ण एष रसोत्तमः ।
सहस्रलक्षकोटीभिः शितारं [?] शुल्वमेव वा ॥२६५क.॥
निर्बीजं वेधयेत् सूतस्तद्धेम प्रभरं भवेत् ।
रसायने रसो ह्येष माषनिष्पावरक्तिका ॥२६६॥
अथ सर्षपमात्रं वा मध्वाज्यसहितं ग्रसेत् ।
हाटकाभो [भ-]वेदब्दान्महाबलपराक्रमः ॥२६७॥
महाकल्पायुषो दिव्यो जराव्याधिविवर्जितः ।
संतिष्ठेन्मृत्युलोके तु शिवाराधनतत्परः ॥२६८॥
मन्त्रज्ञानसमायोगे योगेश्वरपदमियात् ।
रसश्च रसकश्चैव द्वावेतौ तु महारसौ ॥२६९॥
परस्परहितं[तौ] तारौ तारकांचनकारकौ ।
शोध्यमुक्तविधानेन रसं पादेन वीजितम् ॥२७०॥
वन्ध्याकंचुकिकन्दोत्थं रसं तेन विमर्द्दयेत् ।
सूष्टित्रयं ज[पा]पुष्पं महारक्तेन मर्द्दयेत् ॥२७१॥
तेन तारं पुटे पक्वं सप्तवारोपलाग्निना ।
तत्पीतं जायते हेम हेमार्द्धं मातृकोत्तमम् ॥२७२॥

शुल्वारांतेन निर्द्धं[धूम]मन्धयित्वा तु लेपितम् ।
सप्तवाराणि विधिवत् तत्पीतं हेमयोजितम् ॥२७३॥
रक्तस्नेहे निषिक्तं तु भवेद्धेम सुशोभनम् ।
आद्योक्तं कारयेद्योगं रसस्य रसकस्य च ॥२७४॥
गुडोर्णागारधूमं तु ज्योतिस्तैलेन संयुतम् ।
शिशुमारस्य वसया कटुतैलेन वा युतम् ॥२७५॥
आयसे तु कृतं[ते] पात्रे चिप्त्वा तत्केवलं बुधः ।
सप्तधा पुटयेत्तारं लेपयित्वान्धितं धमेत् ॥२७६॥
कुरण्टपुष्पसदृशं हेम हेमांशयोजितम् ।
रजक[सकं] सूतबीजं तु पादांशाद्रक्तभावितम् ॥२७७॥
लवणक्षारसंयुक्तं शिखिपित्तेन भावितम् ।
मत्स्यपित्तेन संभाव्य त्वम्लवेतसभावितम् ॥२७८॥
क्रामणेन समायुक्तं तारपत्राणि लेपयेत् ।
पुटपाकेन पक्वानि सप्तवाराणि तानि तु ॥२७९॥
भवन्ति पीतसाराणि प्रलेप्यान्धं धमेत्ततः ।
तत्पीतं जायते सारं हेमांशेन च योजयेत् ॥२८०॥
जायते मातृकातुल्यं कालिकारहितं शुभम् ।
सिन्दूरं रसकं चैव पटुक्षाराम्लभावितम् ॥२८१॥
रक्तपीतेन संमोद्य[मर्द्य] क्रामणेन समायुतम् ।
नागयुक्ते सिते वाप्य तारारिष्टे खलेऽपि वा ॥२८२॥
त्रिगुणं रक्तसेकेन स्नेहे धातुविनिर्गतम् ।
पीतसारं [ -तु ] हेमार्द्धं हेमार्द्धेन तु योजितम् ॥२८३॥
द्विवर्णपतितं हेम योगोपकरणे हितम् ।
तदेव नागे त्रिगुणं वासयित्वा सिते क्षिपेत् ॥२८४॥

त्रिधादोषविहीनं तु मार्जाराक्षिनिभं भवेत् ।
षड्वर्णमूल्यं विज्ञेयं मात्र्यूणं[नं] हेमयोजितम् ॥२८५॥

रसकं सूतकं बीजं पादयोगेन योजितम् ।
अम्लवेतससंयुक्तं कलयोवै[यैवो]दिते दिने ॥२८६॥

भक्षयेत् प्रातरुत्थाय दीप्तबीजेन मंत्रितम् ।
संवत्सरेण एकेन जराव्याधिविवर्जितः ॥२८७॥

कल्पायुर्जायते सिद्धो दिव्यदेहो महाबलः ।
तीक्ष्णचूर्णं तथा शुल्वं हरिद्रापिष्टयोजितम् ॥२८८॥

अम्लवेतससंयुक्तं तीक्ष्णं चार्यं च सूतके ।
तेनैव कारयेत् कल्वं भक्षयेत् प्रातरुत्थितः ॥२८९॥

कलामात्रं तु मंत्रात्मा दीप्तबीजेन मंत्रितम् ।
विषुवे खादयो[ये]द्योगे जरया नाभिभूयते ॥२९०॥

अभिभूतोऽपि षण्मासाद् द्विरष्टवर्षाकृतिः ।
जरारुजा विनिर्मुक्तो मासाद्वै कल्पजीवितः ॥२९१॥

शस्त्राग्निविषतोयेन नैव मृत्युर्विधीयते ।
सिद्धः क्रीडति मर्त्यस्तु महाबलपराक्रमः ॥२९२॥

पीताभ्रभस्मवैक्रान्तसस्यकाभ्रामलस्य च ।
मार्क्ष[क्षी]कदरदस्यैव पटलाऽलं सगैरिकम् ॥२९३॥

कासीसदानवेन्द्रस्य शिलातुत्थनृपस्य च ।
हरिद्राख्यस्य तत्प्रोक्तं किं तत्रोपरसैः समम् ॥२९४॥

पृथक् पृथग्भवेत्कर्म भृङ्गयोगेन त्वादिमम् ।
क्षितिकासीससंयुक्तं मंजनं तु प्रदापयेत् ॥२९५॥

आद्यं द्विकं [तु] तत्प्रोक्तं भृङ्गयोगेन तेन तु ।
विधानेन भवेत्कर्म्म तारारेन्दीवरे समम् ॥२९६॥

पुटेन वाथ वापेन रक्ततैलेन सेचनात् ।
पृथग्योगेन पीतस्तु हेमाद्धान्मात्तकोलकांन[मात्रकोनकम्] ।२९७।
दर[-द]स्य तु वक्ष्यामि रक्तपित्तेन भावयेत् ।
क्षाराम्लस्नेहसंयुक्तं शुल्वे तु त्रिगुणं वपेत् ॥२९८॥
तारं हेम्नि त्रिधा वाप्य रक्तस्नेहे न्यसेत्तदा ।
त्रयं संयोज्य एकत्र क्रमे[म]णेन गुहागतम् ॥२९९॥
रक्तस्नेहे निषेक्तव्यं हेम तन्मातृकासमम् ।
सांजनेन हि हेम्ना तु योजितव्यं कृतेन च ॥३००॥
रक्ताख्यसुरगे बाह्यं त्रिधाक्रमेण संयुतम् ।
तद्भुजङ्गारविन्दे तु सोमे बाह्य त्रिधा बुधः ॥३०१॥
रक्तस्नेहनिषेकेण द्वयं हेम्ना नियोजयेत् ।
समेन मातृकातुल्यं हेम तत्सांजनं भवेत् ॥३०२॥
हेमताराविन्दानि रक्ताख्येन त्रिधाकृतान् ।
त्रिधा तान्यम्लयुक्तानि सूतकेन तु चारयेत ॥३०३॥
जारयित्वा च तत्सार्य हेम शेषेण बुद्धिमान् ।
चतुःषष्टि स वेधी भवेत् तारारिष्टे तु सूतकः ॥३०४॥
षोडशे[शांशा]दिबीजेन षोडशेन तु योजयेत् ।
तद् भवेत् काञ्चनं दिव्यं योगोपकरणे शुभम् ॥३०५॥
तद्विधा[धः] शतधा सूत उत्तरोत्तरवेधकः ।
रसायनोपयोगेन मध्वाज्येन तु माषके ॥३०६॥
अब्ददिव्यमवाप्नोति भवेत्कल्पान्तजीवितः ।
रक्ताख्येन [च] निर्व्यूढं हेम वा शुल्वमेव वा ॥३०७॥
तदुत्कर्षं दशांशेन सितहेम्नश्च जायते ।
द्विवर्णाधिकमूल्यं तु तन्मूल्यं लभते तथा ॥३०८॥

गन्धधूपोपहारार्थं साधकानां प्रकाशितम् ।

अथ गन्धं

दानवेन्द्रस्य वक्ष्यामि यथा कर्म विधीयते ॥३०९॥
पूर्वयोगेण[न] संशुद्धं सुरदाल्या रसेन तु ।
स्वगन्धरहितं यावत् कार्या बलिवसाक्रिया ॥३१०॥
मत्स्यपित्तेन संभाव्य शितिपित्तेन साधयेत् ।
क्रौञ्चजेन तु तद् भाव्य चषकाम्लेन वा बुधः ॥३११॥
बीजपूरादिकाम्लैर्वा क्षारयुक्तं तु पादतः ।
रुवूकस्नेहसंस्थस्तु कटुलैहथ[तैलेऽथ] वा स्थितम् ॥३१२॥
ज्योतिस्तैलस्य मध्ये तु कारञ्जे वा विनिक्षिपेत् ।
शंखिनी तु द्विधा श्रेष्ठा वृहत् क्षुद्रा तु या भवेत् ॥३१३॥
तुलसीवनजावन्ध्याचूर्णं तु द्रविणं क्षिपेत् ।
कृष्णागुरु सितं नाभि रसोनमाठरं क्षिपेत् ॥३१४॥
सार्द्रवस्त्रे क्षणं दद्याद्दानवेन्द्रो द्रुतो भवेत् ।
मधुप्रभोऽप्यशोकस्तु निर्गन्धो जायते बलिः ॥३१५॥
पूर्वसिद्धेन तैलेन त्रिधा हेम दहेद् बुधः ।
तद्रसे पादसंयुक्तं द्रुते पादेन तद्रसम् ॥३१६॥
अम्लवर्गेण संमर्द्य क्रमणेन समायुतम् ।
रक्तस्नेहे क्षिपेत् किंचित्तारं तेन पुटे पचेत् ॥३१७॥
सप्तसंख्यादिबीजेन षोडशेन समायुतम् ।
हेमार्द्धेन भवेद्धेम द्विवर्णं पवित्रं शुभम् ॥३१८॥
मूषामुखे ततः पश्चाद्धापनान्मातृकोत्तमम् ।
पूर्वशुद्धेन बलिना हेमारं वापयेत् त्रिधा ॥३१९॥
द्वयोः समानि तान्येव सूतके चारयेत् समम् ।
कांक्षी कासी बलिः सिन्धुः सितं माठरमेव च ॥३२०॥

भावयेच्च पाकाम्लेन देवदालीरसेन च ।
अम्लेन सोष्मे संमर्द्य तेन गर्भद्रुतिर्भवेत् ॥३२१॥

गजमूत्रेण संश्राव्य उद्रुक्षारं तु सप्तधा ।
गन्धकं पादटङ्केन त्र्यूषणेनाम्लसंयुतम् ॥३२२॥

तेन तज्जारयेद्रागं यन्त्रे कच्छपसंज्ञिते ।
सारयेद्धेम शेषेण समं चीर्णं तु सूतकम् ॥३२३॥

अम्लपिष्टेन तेनैव तारपत्राणि लेपयेत् ।
कलांशेन च हेम्ना तु मन्त्रयुक्तानि पाचयेत् ॥३२४॥

त्रिधा शतेन सूतेन त्र्यहं ग्रस्तं क्षितौ रसम् ।
षोडशांशेन हेम्नः स्यान्मातृकासमतां व्रजेत् ॥३२५॥

विश्रान्तं तु द्विसप्ताहं मातृकोत्तरतां व्रजेत् ।
अनेनैव विधानेन उत्तरोत्तरवेधकम् ॥३२६॥

द्विधा चतुर्द्धा विज्ञेयं शतसाहस्रवेधकम् ।
विशेषेणैव वलवदभ्रसत्वं तृतीयकम् ॥३२७॥

हेमारयुक्तवलिना त्रिधा वापं तु कारयेत् ।
समचीर्णेन शतधा हेम शेषेण सारयेत् ॥३२८॥

कर्म्मणोत्तरोत्तरेण द्विधा चैव सहस्रधा ।
अष्टधा जायते सूतो वलिना तु महाबलः ॥३२९॥

सहस्रलक्षकोटीभिस्तानि लोहानि वेधयेत् ।
तारारविन्दकनकं शतांशेनादियोजितम् ॥३३०॥

तद्भवेत्कांचनं दिव्यं जाम्बूनदसमप्रभम् ।
हेमाभ्रजं शातकुम्भं द्वन्द्वयोगेन योजितम् ॥३३१॥

त्रिधा तान्[तद्] वलिना वाप्य तदा तेन तु चारयेत् ।
चणकाम्लवेतसंपुटमेकैकं तु गुणावहम् ॥३३२॥

बीजपूराच्च चणकश्चणकादम्लवेतसः ।
उत्तरोत्तरवीर्य्यास्ते चारकाः सर्वधातुषु ॥३३३॥

जम्बीरदाडिमाम्लश्च आरनालेन तिन्तिणी ।
चांगेरिकाम्लवल्लिश्च पटुक्षारसमायुता ॥३३४॥

चारणाज्जारणा कार्य्या बीजतीक्ष्णादि गन्धके ।
हेमाभ्रसत्त्वमलिना सर्वजस्य कृतस्य च ॥३३५॥

महद्वीर्यं तु भवति वेधे चैव रसायने ।
रंजकस्तु महानेष सर्वदेहे जरापहः ॥३३६॥

संवत्सरोपयोगेन जरामृत्युविवर्ज्जितः ।
अमरत्वमवाप्नोति दिव्यदेहो महाबलः ॥३३७॥

चारणाज्जारणाहीनो वलिना रज्यते रसः ।
एकाह्नश्च विधानेन तद्विधानं शृणुष्व च ॥३३८॥

पूर्वशुद्धं तु संगृह्य भाव्यं सुष्टित्रयेण तु ।
भावयेत्तेन पक्वेन क्रमेणेन[णैव] समायुतम् ॥३३९॥

रक्तापामार्गान्मतयोः [?] स्नेहेनैव तु भावयेत् ।
पटुक्षारसमायुक्तं सितहिङ्गुसितेन तु ॥३४०॥

नाभिकृष्णाऽगरुं दद्याद्विषोपविषसंयुतम् ।
यथालाभेन तत्कार्यं रसोनं तत्र योजयेत् ॥३४१॥

पलाशतैलसंयुक्तं शिशुमारवसा ततः ।
महास्नेहेन संयोज्य एषा वलिवसावरा ॥३४२॥

शर्वजं तु दिनैकेण[न] गृह्णाति रंजतो[नं] ध्रुवम् ।
हेमाभ्रमष्टमांशेन चणकाम्लेन योजयेत् ॥३४३॥

कृत्वा तु आयसे पात्रे लग्नं तस्यैव चोपरि ।
वटकं तु प्रकर्त्तव्यं तापयेत् कारिषाग्निना ॥३४४॥

पट्टक्षारकृतां वर्त्ति लिप्त्वा वा वंशकाष्ठिकाम् ।
घट्टयेत्तद्रसं तप्तं दीप्तं बीजं समुच्चरेत् ॥३४५॥
वटकद्रवयोगेन वध्यते रज्यते रसः ।
सूर्य्यतापे प्रकर्त्तव्यो दिनान्ते सूतको वरः ॥३४६॥
विध्यते क्रमति क्षिप्रं तारे तु शतवेधनः ।
पात्रलेपं शतांशेन सप्ताहं स्थापयेत् क्षितौ ॥३४७॥
लिप्त्वा गुहागतं ध्मातं षोडशांशादिवीजितम् ।
षोडशांशात् पुनर्वीजं हेम भवति शोभनम् ॥३४८॥
गन्धकं पूर्वशुद्धं तु सुरदालीरसप्लुतम् ।
तेन नागं त्रिधा वाप्य तत्त्रिधा वाहयेत्सिते ॥३४९॥
सृष्टित्रयसमोपेतं तत्सितं कृष्णतां नयेत् ।
अलिवक्षोषमं दिव्यं हेमार्द्धान्मातृकोत्तरम् ॥३५०॥
तदेव रसतैलं ; शर्वजोरगसंयुगम् ।
क्रामणे तु समायुक्तं द्रावयित्वा च योजयेत् ॥३५१॥
स्नेहमध्यात्तदुद्धृत्य त्वम्लवेतसभावितम् ।
चणकाम्लेन वा भाव्यं तारपत्रं पुटे पचेत् ॥३५२॥
त्रयो[त्रीन्] वारान्विधिवल्लिप्त्वा ध्मातं[-चैव] गुहागतम् ।
नागहीनं भवेत् कृष्णं अलिपक्षसमप्रभम् ॥३५३॥
हेमार्द्धात्संभवेद्धेम द्विवर्णपतितं शुभम् ।
सर्वलिस्सोमरजसा चाराम्लेन समीकृतः ॥३५४॥
सप्तपातनयोगेन त्वलिपक्षनिभो भवेत् ।
समांशा गरुडेनैव त्वर्द्धपादोनको भवेत् ॥३५५॥
दानवेन्द्रं तु संचू[-र्ण्य] धारापात्रे तु धारयेत् ।
अगस्तिपुष्पतोयेन आशुगेन तु भावयेत् ॥३५६॥

मूर्व्वातोयेन तद्भाव्यं सुरदालीरसेन तु ।
कोशातक्यास्त्रिधा भाव्यं तैलकेन त्रिधा ततः ॥३५७॥
वक्ष्यमाणेन विधिना मोदयित्वा नयेद्बुधः ।
निक्षिपेन्मेषिकाक्षीरे दधिभावमुपागतम् ॥३५८॥
तज्जातं स्नेहमादाय तन्मात्रभ्रामके[मभ्रके] क्षिपेत् ।
अम्लवर्णस्तु दातव्यो वलिस्नेहस्य चोपरि ॥३५९॥
पादबीजं रसं दद्याद्धेमाभ्रसमयोजितम् ।
निदध्यात्स्नेहमध्ये तु मृदुना त्वग्निना तपेत् ॥३६०॥
अम्लवर्गेण संमर्द्य यावत्तत्तु दिनत्रयम् ।
गोश्रृङ्गे संनिधातव्यं धान्ये मासद्वयं न्यसेत् ॥३६१॥
तेन तारं पुटे पक्वं त्रिवाराणि ततो धमेत् ।
हेम्ना युक्तं तु कल्याणं मातुरभ्यधिकं भवेत् ॥३६२॥
अथाभ्रबीजहीनं तु गन्धबीजेन संयुतम् ।
तदर्द्धेन च हेम्नस्तु द्विवर्णपतितं भवेत् ॥३६३॥
उन्मत्तकादितैलेन गन्धकं भावयेद्बुधः ।
अर्कतूले विनिक्षिप्य तेन तैलेन दीपयेत् ॥३६४॥
तद्द्रवेद्वर्त्तियोगे तु बीजयुक्तमघोरसम् ।
मर्द्दयेच्च यथा[-यो]गात्किंचिदम्लसमायुतम् ॥३६५॥
तेन तारस्य पत्राणि पुटितानि यथार्थतः ।
त्रीन्वारांस्तु हेमार्द्धं स्यात् पादार्द्धपतितं भवेत् ॥३६६॥
रसतैलादिमध्ये तु भावयित्वा तु गन्धकम् ।
शङ्खिनी देवदाली च यवचिंचकसंभवैः ॥३६७॥
वीजैस्तु चूर्णयेद्विद्वान् द्रुत एव स तिष्ठति ।
मधुवच्च यथागन्धं सबीजं सूतकेन तु ॥३६८॥

कान्तपात्रे तु संमर्द्य च[क]णकृष्णारसं क्षिपेत।
अम्लस्य रसमादाय कान्तगन्धेन सूतकम् ॥३६९॥

रज्यते गन्धमायाति तारं तेन पुटे पचेत्।
हेमार्द्धेन समायुक्तं मातुरप्यधिकं भवेत् ॥३७०॥

वलिबीजयुतं सूतं चूलिकं चाम्लमर्दितम्।
कान्तपात्रे मनाक् शोष्य तैलेनैकेन योजितम् ॥३७१॥

सितं तेन पुटे पक्वं त्रिधा हेमार्द्धयोजितम्।
द्विवर्णपतितं हेम कूष्माण्डकुसुमप्रभम् ॥३७२॥

कुम्भिकाकारपत्रा तु या भवेद्यवचिंचिका।
तस्याः क्षीरेण संभाव्य सबीजं सूतगन्धकम् ॥३७३॥

पीतक्षारा तु सा प्रोक्ता गोजिह्वा द्विविधा भवेत्।
पीतपुष्पा भवेच्छ्रेष्ठा तस्याः क्षीरेण मर्द्दयेत् ॥३७४॥

अम्लस्नेहेन संयुक्तं ताराविष्टे पुटे पचेत्।
त्रिधा[-ध्मा]तं तद् गुहायां तु हेमार्द्धं मातृकोत्तरम् ॥३७५॥

तारारविन्दं पुटयेत्तेनैव तु पृथक् पृथक्।
हेमार्द्धात् संभवेद्धेम मातुरप्यधिकं शुभम् ॥३७६॥

गोजिह्वा क्षीरिणी कान्ता क्षीरिका यवचिंचिका।
गन्धकं तद्रसैर्भाव्यं प्लावयित्वा सकृत्सकृत् ॥३७७॥

क्षाराम्लसंयुतं कृत्वा सृष्टितैलवसायुतम्।
वज्रमूषा क्षितिगता त्वष्टांगुलमधोगता ॥३७८॥

अष्टांशेनोपरि गन्धं दत्त्वा चाग्निं तु कारयेत्।
सबीजं तु रसो दग्धः सरागं विमुञ्चेद्बलिः ॥३७९॥

कारयेत् सप्तसप्ताहमलिपक्षनिभो भवेत्।
तेन तारस्य पत्राणि हेमयुक्तानि कारयेत् ॥३८०॥

अष्टांशेन तु लिप्तानि त्रीन्वारान्संपुटे पचेत् ।
अर्द्धेन तु पुनर्लिप्त्वा त्रिसप्ताहं न्यसेत् क्षितौ ॥३८१॥

अंध्य[न्ध]ध्मातानि स्वर्णं तु भवेन्मातृकया समम् ।
तेनैव कच्छपे यन्त्रे सूतकं छाद्य दाहयेत् ।३८२॥

एकविंशतिदिवसानम्लयुक्तेन तेन तु ।
तारपत्रं सबीजं तु पुटे पक्वं त्रिधा ततः ॥३८३॥

अर्द्धेन लेपितं धाम्य गृहायां मातृकासमम् ।
विषोपविषसंयुक्तं गन्धकं तु यथागमात् ॥३८४॥

सबीजं तु रसं योज्य तस्य पादेन मर्दयेत् ।
[1]लेलीतकरसेनैव त्रिपुटं तु सिते पचेत् ॥३८५॥

हेमार्द्धेन समायुक्तं मातुरप्यधिकं भवेत् ।
बलिसूतं सबीजं तु ब्रह्मरक्तं विषं तथा ॥३८६॥

लांगली मणिमन्थं तु सृष्टित्रयसमायुतम् ।
अम्लेन मर्दयेत्तं तु स्नेहैकेन नियोजयेत् ॥३८७॥

तेन तारस्य पत्राणि लिप्त्वा सम्यक् पुटे पचेत् ।
तुल्यहेमानि मूषायां ध्मातानि कनकं भवेत् ॥३८८॥

भवेच्चैवाष्टमांशेन पूर्वं संशुद्धदानवः ।
पटुक्षाराम्लसंयुक्तः सृष्टिक्रमेण संयुतः ॥३८९॥

धूर्त्तादितैलयुक्तस्तु सोमपत्रे तरस्तरम् ।
मुनिसंख्यान्वितं ध्मातमलिपक्षनिभं भवेत् ॥३९०॥

स्नेहे निषिक्तं तद्द्रव्यं धातुदोषविवर्जितम् ।
पादार्द्धहीनं हेमार्द्धा[र्द्धं] तद्भवेत्कनकं शुभम् ॥३९१॥

---

१. शत्रुञ्जयगिरिनारदादिपर्वतेषु शिलाद्रावो लेलितकं लोकभाषायां महाद्राणिति प्रसिद्धम् ।

भ[भूमि]जोरगपादेन रागस्नेहे त्रिधा वलिः।
वन्धस्नेहेन रहितः संयोगान्नष्टविग्रहः ॥३९२॥

दुर्गन्धोन्मत्ततोयेन बहुशः परिभावितः।
सामं गुहागतं ध्वान्तं शिखिसंख्यादलीकृतम् ॥३९३॥

रक्तस्नेहे निषिक्तं तु सोन्मत्तत्वं च जायते।
धूर्त्तफलगर्भमध्ये सबीजं सूतकं न्यसेत् ॥३९४॥

कांक्षीकासीसकर्पूरमाठरेण विलेपितम्।
पटुक्षाराम्लयुक्तेन दानवेन्द्रस्य[श्च] वध्यगः ॥३९५॥

अष्टमांशस्याधोर्द्ध्वेन मूषामृत्तिकलेपनात्।
कर्षाग्नौ स्वेदयेत्तं तु यथागर्भे न दह्यते ॥३९६॥

सप्तवारांश्च स्वं[सं]स्वेद्य सितं हेम तु[च] लेपयेत्।
विश्रान्तं पुटितं ध्मातं कृष्णं वाथ निरञ्जनम् ॥३९७॥

चतुर्वर्णाधिकं तद्धि संभवेन्नात्र संशयः।
त्रिसप्तैवंगतः सूतस्त्वष्टमांशादिबीजितः ॥३९८॥

समे पत्रे तु विश्रान्तं कलांशात्पुटितं हि तत्।
अष्टांशयोजितं ध्मातं मातृकोणं गुहामुखे ॥३९९॥

तत्कालं तु सुविश्रान्तं मातुरप्यधिकं भवेत्।
दानवेंद्रस्तु संशुद्धः पटुक्षारसमायुतः ॥४००॥

क्षितिकासीसपादेन रजनीशङ्खसंयुतः।
रजनीवंक[ग]योगस्तु मातुलुंगाम्लयोजितः ॥४०१॥

क्षारतैले सरागे तु निक्षिपेत् सर्वजं बुधः।
नागारेन्दीवरे हेम्नि वलिनावाहिते त्रिधा ॥४०२॥

हेम्नाहीनेन वा कार्यं किंचिन्न्यूनगुणो भवेत्।
अष्टांशेन तु तत्रैव वलियुक्तं विनिक्षिपेत् ॥४०३॥

मृद्वग्निना पचेन्नित्यं दिव्ये कान्तायसेऽपि वा ।
सोष्णेन आरनालेन एकाहात् सेचयेद्रसम् ॥४०४॥
बलियुक्तं मनाक्क्वाथ्य ततस्तैलं विनिक्षिपेत् ।
ताम्रे वा आयसे पात्रे तत्तैलं चैव संग्रहेत् ॥४०५॥
सप्ताहोर्ध्वं तु सूतस्तु हेमोत्कर्षः शुभो भवेत् ।
एकवर्णादितो यावत् ऋतुनाष्टकलोदयः ॥४०६॥
उत्तरोत्तरयोगेन षण्मासात् सूतकः कृतः ।
सितं तु सांजनं हेम सितहेमाथवापि वा ॥४०७॥
तारारिष्टं तु लेपेन विश्रान्तमन्धधामितम्[ध्मापितम्] ।
बीजषोडशसंयुक्तं षोडशेन तु योजितम् ॥४०८॥
षोडशेन रसो ह्येष भवति स्वर्णकारकः ।
विषोपविषसंयुक्ताः क्षाराम्लपट्टसंयुताः ॥४०९॥
सर्वयोगास्तु कर्त्तव्या दानवेन्द्रादिचोदिताः ।
दानवेन्द्रविधानं तु स्फुटं गीतं विधानतः ॥४१०॥
सर्वोदयगुणं श्रेष्ठमन्तिमं तु यथा तथा ।
कृतं हरति दारिद्र्यं दानवो रसयोजितः ॥४११॥
तिलतैलेषु रक्तेषु पट्टुक्षाराम्लसंयुते ।
दानवो मुंचते रोगं शर्वजे मृदुनाग्निना ॥४१२॥
रक्तपीतानि तैलानि अथ तानि नियोजयेत् ।
गरुडस्य तु कृष्णस्य रक्तस्य तु[च] समुद्धरेत् ॥४१३॥
बीजानि चूर्णयित्वा तु क्षारतैलेन मोदयेत् ।
तस्य तैलं तु विधिवदधोयन्त्रेण पातयेत् ॥४१४॥
अधोपातनसंयुक्तं क्षिप्त्वा पात्रे दृढे बुधः ।
धरागतं न्यसेत्पात्रं गोमयैर्दीपयेद् बुधः ॥४१५॥

षतति तस्य यत्स्नेहमपामार्गे तथैव च।
अङ्कोलस्नेहमेवैतद्यवचिञ्चिकसंभवम् ॥४१६॥

कोशातकी देवदाली प्रपुन्नाटकशङ्खिनी।
दमनी चैव कूष्माण्डी वाकुची काशमर्दकः ॥४१७॥

काकांडी कारवेल्ली च फलं वा नारिकेरकम्।
अनेन विधिना तैलं मुच्येन्नैवात्र संशयः ॥४१८॥

रागतैलं कृतं दद्यात्क्रमे[म]णार्थं तु किंचन।
रसोपरसकार्येषु रसबन्धेषु योजयेत् ॥४१९॥

द्रावका गन्धकस्यैते पटुक्षारसमायुताः।
पद्मारतारतारैकं द्रुतः कांचनकारकः ॥४२०॥

संस्कृतस्तैलमध्यस्थः पटुक्षाराम्लवापितः।
द्रवति तत्क्षणादेव बलिः सूतकयोजितः ॥४२१॥

सबीजे[जो] वाथ निर्बीजे[जो] भवेत्कांचनकारकः।
गैरिकायां प्रवक्ष्यामि पूर्वशुद्धां तु भावयेत् ॥४२२॥

रक्तवर्गेण बहुशः पीताम्लेन च भावयेत्।
क्रमणेन समायुक्तं हेम निर्वापयेत् त्रिधा ॥४२३॥

तच्चारयेद्रसेंद्रे तु समे षोडशवेधनः।
तारारिष्टे भवेत् सद्य आदिषोडशबीजितः ॥४२४॥

अष्टांशहेमसंयुक्तं हेम भवति शोभनम्।
द्विधा द्वात्रिंशद्वेधीस्याच्चतुर्द्धा चतुःषष्टिकः ॥४२५॥

अष्टधा शतवेधी स्यात्सूतः षोडशधाकृतः।
सहस्रवेधी भवति द्वात्रिंशद्गुणचारितः ॥४२६॥

लक्षवेधी भवेत्सूतस्तद्द्विधा कोटिवेधनः।
रसायनोपयोगेन कल्पायुरक्षतो भवेत् ॥४२७॥

जराव्याधिविनिर्मुक्तो महाबलपराक्रमः ।
तद्बीजं योजयेत्तारे समासं [मांशं] धातुनिर्गतम् ॥४२८॥
त्रीन्वारांस्तु पुटे पक्वं द्विवर्णपतितं भवेत् ।
त्रिधा तु शुल्बे निर्व्यूढं तत्त्रिधा वाहयेत्सिते ॥४२९॥
रक्ततैले निषेकेण धातुहीनानि कारयेत् ।
पुराणे योजयेद्धेम द्विवर्णपतितं भवेत् ॥४३०॥
तारारेन्दीवरे वाथ तं नागं त्रिगुणं वपेत् ।
पृथक् पृथग्भवेत्पीतहेमाद्धान्मातृकोनके ॥४३१॥
शुद्धा तु केवली गौरी कर्म्मयोगेन या कृता ।
स्नेहिते पुटपाकेन हेमोत्कर्षकरो भवेत् ॥४३२॥
पुटपाकक्रमाद् वृद्धिश्चीर्णोत्तरगुणा भवेत् ।
रागस्नेहनियोगेन सेकेन च शुभं भवेत् ॥४३३॥
युगलस्य शिलाहेम कासीसं वा [-पचेत्] तथा ।
गौरिकोक्तविधानेन कुरुते कर्म बुद्धिमान् ॥४३४॥
क्षितिकासीसः सर्वेषामल्पत्वादनुपाविनी ।
विशेषेण तु पादेन कर्मोत्तरगुणो[णा] भवेत् ॥४३५॥
क्षितिकासीसयन्त्रेण ऊर्ध्वेन तु निपातयेत् ।
पट्टक्षारयुता किंचिदम्लस्नेहेन भाविता ॥४३६॥
रक्तेन रसतैलेन भावयित्वा पुटे पचेत् ।
सितहेम त्रिधा पीतं वर्णद्वयगुणावहम् ॥४३७॥
जलेन तु समायुक्ता तारं कृष्णं करोति या ।
साण्व[?]मग्निसंयोगात्तारे कांचनकारिका ॥४३८॥
पट्टक्षाराम्लयुक्ता तु पीतरक्तेन भाविता ।
शिखिपित्तविशेषेण नरजं रक्तमेव वा ॥४३९॥

तेनैव पुटयेत्तारं सप्तधा लिप्तमन्धितम् ।
रागस्नेहे निषिक्तं तु धातुहीनं तु कारयेत् ॥४४०॥
हेमार्द्धयोजितं हेम पादार्द्धं तु विधीयते ।
अष्टांशेन तु तत्रैव वलियुक्तं विनिक्षिपेत् ॥४४१॥
मृद्वग्नौ तापयेन्नित्यमयस्कांतायसेऽपि वा ।
सोष्णेन चारनालेन एकाहं स्वेदयेद्रसम् ॥४४२॥
वलियुक्तं समावाप्य ततस्तैले विनिक्षिपेत् ।
नृपो वैडम्बकस्तुत्थं पट्टुचारसमायुतम् ॥४४३॥
अम्लस्नेहेन संभाव्य नागारेन्दीवरे वपेत् ।
समानि तारे निर्वाह्य समे च षट्कवर्णकम् ॥४४४॥
तद्धेम्ना संयुतं कृत्वा त्रिधा वाप्य निषेचयेत् ।
रक्तवर्गो[र्णं] भवेद्धेम पादोनं नात्र संशयः ॥४४५॥
पट्टुक्षाराम्लपीतैस्तु यथा लाभेन भावयेत् ।
रागस्नेहेन संस्नेह्य सितं हेमपुटे पचेत् ॥४४६॥
वापयेद्वाप्य त्रीन्वारान् कलांशेन तु सेचयेत् ।
रक्तस्नेहसमुत्कर्षं चतुर्वर्णगुणोदयम् ॥४४७॥
पृथक् विडंबके[रं?] युक्तं द्विवर्णगुणदो भवेत् ।
नागे वा केवले वाप्य शुल्वारे वा सिते क्षिपेत् ॥४४८॥
हेमत्वकारका ह्येते योजयेच्च यथा तथा ।
पञ्चारधातुहीनास्तु दशांशात्कर्षकारकाः ॥४४९॥
पट्टुक्षाराम्लसंयुक्ताः कांक्षीकासीसपादतः ।
नियोक्तव्यास्तु निक्षारा गौत्तम(रौप्यत्व?]कारको ऽपिवा ।४५०।
जलशूकं सितं हिंगु चणकाम्लवेतसेऽपि वा ।
योजयित्वा तु संशोष्य ततो रक्तरजं[रजतं] पचेत् ॥४५१॥

संयोज्य चोष्मणा क्षिप्रं राजावर्त्तं समुत्थकम् ।
मुक्ताविद्रुमरक्तं वा श्रा[भा]वयेन्नात्र संशयः ॥४५२॥

कृष्णागुरु सितं नाभि रसोनं श्वेतमाठरम् ।
पलासबीजं तोयेन सोष्णे मिलति तत्क्षणात् ॥४५३ ॥

सूतकस्य[केन] द्रुताः सर्वे वज्राद्या आयसाश्च ये ।
नृपतुत्थाकयोगेन सितं तु शतभागहाः ॥४५४॥

विद्धं तु जायते हेम नागशुल्वारमेव वा ।
वज्रमौक्तिकयोगेन वंगारस्वख[र्ण]योजितः ॥४५५॥

तारतां च नयेत् सूतः सहस्रशतवेधकः ।
पद्मरागेन्द्रनीलेन तथा मरकतेन च ॥४५६॥

पुष्परागेण युक्तस्तु शतसाहस्रवेधकः ।
विद्रुमैस्तु शतांशेन द्रुतैर्युक्तो महारसः ॥४५७॥

समहेमसमायुक्तो योजितव्यो महोदयः ।
रसे रसायने चैव महाकल्पप्रजीवनः ॥४५८॥

दिव्यदेहो महातेजा बलवान् भवति क्षितौ ।
रक्तविद्रुमयुक्तो[मुक्ता] भिर्द्रुतैः कार्या पुनर्बृहत् ॥४५९॥

हेमताराारबिन्देषु पुटः कार्यः स्ववर्णतः ।
कृष्णे च हरिते चैव त्वरविन्दे तु कारयेत् ॥४६०॥

अथ हेमपुटाः श्रेष्ठाः सर्वेषां चारतोयतः ।
तत्त[-द्] द्रवं विनिक्षिप्य संधिच्छिद्रानुसंधितम् ॥४६१॥

अग्निहीने तु निक्षिप्य क्षीरे च माहिषाविके ।
कोकिलाक्षकबीजानां तत्र चूर्णं विनिक्षिपेत् ॥४६२॥

जलमध्ये तु तद्भाण्डं क्षिप्त्वा तत्तु पिधायितम् ।
लाक्षामदनयोगेन संस्थं तत्तु दिनत्रयम् ॥४६३॥

वैडंबपात्रे संस्थाप्य पुटाच्च कीलयेत्ततः ।
पूर्ववच्च भवेद्द्रलं मुक्ताविद्रुममेव च ॥४६४॥

महद्भूतिप्रदो ह्येष प्रयोगो भुवि दुर्लभः ।
यथालाभेन संग्राह्य रसांश्चोपरसान् बुधः ॥४६५॥

संश्राव्योदधितोयेन त्वथ तञ्जार[ज्जेन]वारिणा ।
अवरं भावयेत्तेन सप्तधा सूर्यरश्मिभिः ॥४६६॥

कृष्णागरु सितं नाभि जलशूकं च माठरम् ।
रसोनं च विनिक्षिप्य तेन तोयेन मर्द्दयेत् ॥४६७॥

तेन स्नेहश्च पत्राणि लिप्त्वा स्थाप्यातपे बुधः ।
अथोष्णे स्थापयेत्पात्रे तत्क्षणाद् द्रवतां नयेत् ॥४६८॥

षड्लोहानि द्रवन्त्येवं सूतके तु नियोजयेत् ।
तेन योगेन संमर्द्य मिलति तत्क्षणेन तु ॥४६९॥

क्षणाद्बन्धः स्मृतः सूते शतसाहस्रवेधकः ।
वेधयेत्तानि लोहानि तारहेमकरः शुभः ॥४७०॥

वङ्गनागैर्विनिर्मुक्तः सरसस्तु रसायने ।
निष्पावमात्रः षण्मासाज्जायते ह्यजरामरः ॥४७१॥

तिष्ठेत् स मर्त्यलोके तु महाबलपराक्रमः ।
श्रोतांजं तगरं चैव लेलीतकसमायुतम् ॥४७२॥

शिलाजतुसमायुक्तं सूतकं तु विमर्द्दयेत् ।
क्षणाद्बन्धमुपायाति महदग्निसहो भवेत् ॥४७३॥

सारणात्सर्वलोहानां शतसाहस्रवेधकः ।
श्रोतांजनं सतगरं सृष्टित्रययुतं रसम् ॥४७४॥

ध्मातो ह्यग्निसहः क्षिप्रं सूतकः सर्वकर्म्मकृत् ।
रसे रसायने चैव द्वावेतौ तु महोदयौ ॥४७५॥

भस्मबन्धा इमे ख्याता निर्बीजा बीजसंयुताः ।
ध्माताद्गोलकबन्धस्तु रसे चैव रसायने ॥४७६॥
विश्वरूपा तु या विद्या कामिकान्तापदोद्भवा ।
योगेश्वरि पदस्यान्ते योजयेत्तु क्रियापदम् ॥४७७॥
गोपयेत् सर्वभूतानां स्वाहान्तं योजयेत् पदम् ।
लक्षं पूर्वं जपेद्विद्यां सर्वग्रस्ते दिवाकरे ॥४७८॥
सोमे वा पुष्यदिवसे त्वहोरात्रे सदा भवेत् ।
तदा जपेद्विश्वरूपां गुटिका मुखसंस्थिता ॥४७९॥
अदृश्यः सर्वभूतानां साधकस्तु महाध्वरे ।
खेचरत्वमवाप्नोति जरामृत्यु विवर्जितः ॥४८०॥
क्षुत्पिपासाद्यवरुजो जायन्ते न कदाचन ।
विषाग्निशस्त्रतोयैस्तु भूतजं न भयं भवेत् ॥४८१॥
क्रीडेच्च दिव्यदेहस्तु महाकल्पं महाध्वरे ।
तत्रैव ज्ञानमासाद्य मुक्तिं प्राप्नोति साधकः ॥४८२॥
मन्त्रस्य सूतकस्यैव एतद्बीजं महाद्भुतम् ।
सर्वायसेन विधिवत्कर्त्तव्यं सूतबन्धनम् ॥४८३॥
शास्त्रोक्तेन विधानेन कर्त्तव्यं मन्त्रसाधनम् ।
संकीर्णान्यथ कर्माणि कर्त्तव्यानि विधानतः ॥४८४॥
रसोपरसयोगेन तान् शृणुष्व यथार्थतः ।
कुलूतविषये जातात् रोहिण्यां भैरवस्य तु ॥४८५॥
शिखरे भैरवस्यैव नीलीस्पर्शेन शुक्लकृत् ।
पुष्पकासीसमादाय गन्धकं पीतमेव च ॥४८६॥
पूर्वशुद्धानि विधिवत्पूजयित्वा समानि तु ।
पीतं कृष्णं तथा रक्तमेकं सो[सं]योज्य चाभ्रकम् ॥४८७॥

रसं बीजेन रहितं चतुर्थांशेन पेषितम् ।
बलिकासीसनिर्व्यूढं बीजं निर्वाहयेद् बुधः ॥४८८॥

समभागं रसं योज्य पेषयित्वा यथायथम् ।
त्रिरक्षा श्रावणीतोयं पोतकी अर्जकस्तथा ॥४८९॥

कृष्णताम्बूलेन संपिष्ट्वा ताम्रपत्राणि लेपयेत् ।
पुटत्रयं ततो दद्यात् पुनर्लेपं तु दापयेत् ॥४९०॥

अन्धाख्यं धारयेद्विद्वान् काञ्चनं जातरूपकम् ।
पुष्पकासीसचूर्णं तु रक्तगोचन्दनारसम् ॥४९१॥

रक्तापामार्गजं चैव शृंगीविषं च लांगली ।
विषोपविषमन्यं वा एकैकं तु नियोजयेत् ॥४९२॥

लेपयेन्नागपत्राणि तापयित्वा निषेचयेत् ।
पुनर्लिप्त्वा पुनः सिक्त्वा सप्तवारान्पुनः पुनः ॥४९३॥

लेपयित्वा ततश्चान्ध्य पूरयित्वा यथायथम् ।
विषं रसं हिंगुलकं उक्तं द्रवति मर्दितम् ॥४९४॥

तरस्तरं कृतं नागं स्त्रीस्तन्ये तु नियोजितम् ।
मुखोर्ध्वसुखि[षि]रं कृत्वा पिधाय च प्रतापयेत् ॥४९५॥

द्रुतं ज्ञात्वा च संग्राह्य रक्ततैलेन पातयेत् ।
सुवर्णं तत्क्षणादेव योगोपकरणे भवेद् ॥४९६॥

साधकः साधनविधौ तेन कार्याणि कारयेत् ।
पद्मपत्रनिभा श्रेष्ठा कुंभिका रक्तपत्रिका ॥४९७॥

औषधिस्तु समाख्याता सैवोक्ता यवचिंचिका ।
क्षीरं[रसं] गृह्य विधानज्ञो भावयेद्रसकं बुधः ॥४९८॥

पुटे तत्र पचेद्विद्वांस्ततस्तेनैव भावयेत् ।
तेन क्षीरेण संमर्द्य ग्रसते त्वभ्रकं क्षणात् ॥४९९॥

निदध्यात् स्नेहमध्ये तु रसोपरससंयुतम् ।
गोश्रृङ्गे संनिधातव्यं चक्रस्वेदे नियोजयेत् ॥५००॥
मासमेकं विधानज्ञस्तैलयोगेन बुद्धिमान् ।
तेन तारपुटे पक्वं कांचनाभं विधीयते ॥५०१॥
अर्द्धेन मातृकातुल्यं भवेद्धेमोत्तमोत्तमम् ।
रसोपरसयोगेन यथालाभेन वापयेत् ॥५०२॥
हेम्ना समं नियोक्तव्यं सर्वजस्य तु पादतः ।
रसोपरससंयुक्तमम्लवर्गेण मर्दयेत् ॥५०३॥
पादेन सूतकं योज्य शिशुमारवसां क्षिपेत् ।
ज्योतिष्मत्याश्च तैलेन सप्ताहं स्वेदयेद् बुधः ॥५०४॥
गोश्रृङ्गे चक्रयोगेन स्वेदयित्वा मुहुर्मुहुः ।
तारारिष्टे पुटे पक्वं सप्तवारांश्च बुद्धिमान् ॥५०५॥
मध्वाज्यसहितं कृत्वा त्वन्धमूषे धमेत्ततः ।
हेम तैले निषेक्तव्यं हेमार्द्धाद्धेम चोत्तमम् ॥५०६॥
रसाश्चोपरसाश्चैव शुक्ता[शुद्धा] ग्राह्या यथागमात् ।
तारं वाथ रसो योज्यः पादांशेन तु बुद्धिमान् ॥५०७॥
रसोपरसवर्गस्य सूतकं पादयोजितम् ।
वापयेदम्लयोगेन मीनस्नेहे नियोजयेत् ॥५०८॥
स्वेदयेद्रक्ततैलेन त्वथवारुष्करेण वा ।
शुल्वपत्रं पुटैर्दग्धमन्धमूषे धमेत्ततः ॥५०९॥
मीनस्नेहे निषेक्तव्यं कृष्णतापं सितं भवेत् ।
अथवा सप्तवेधानि पंचमांशे च दापयेत् ॥५१०॥
सिताद्धेन समायुक्तं तारं भवति शोभनम् ।
रसोपरसयोगं तु शोषयित्वा विधानतः ॥५११॥

पातयित्वा तु विधिवद्रक्तवर्गेण भावयेत् ।
रक्तवर्गेण ते भाव्याः पीतवर्गेण भावयेत् ॥५१२॥
यथालाभेन विधिवद्रक्तवर्गेण भावयेत् ।
ज्योतिष्मत्याश्च तैलेन शिशुमारवसां युताम् ॥५१३॥
संस्विन्ना चक्रयोगेन सिते हेम नियोजिताः ।
षोडशांशेन पिण्डे तु पत्रे वाथ पुटे पचेत् ॥५१४॥
रक्ततैले निषेक्तव्यं वर्णद्वयगुणावहम् ।
त्रिरूर्ध्वं कारयेद्योगं पंचधा वाथ कारयेत् ॥५१५॥
उपरिष्टाद्यथालाभमधिकं तु गुणावहम् ।
पट्टुक्षारसमायुक्ता रक्तशुल्बनियोजिताः ॥५१६॥
सर्वे योगाः प्रकर्त्तव्याः पीतशुल्क[ल्व]विधानतः ।
यथालाभेन शुल्कां[ल्वां]स्तु शुद्धान् संगृह्य बुद्धिमान् ॥५१७॥
रसांश्चोपरसांश्चैव बीजयुक्तं तु सूतकम् ।
पादेन तु विनिर्योज्य [द्विबी]जक्षुण्णांस्तदा बुधः ॥५१८॥
निष्ठीव्य मर्दयेद्यत्नाद्वरुणेन अथापि वा ।
खरमूत्रेण संभाव्य पट्टुक्षारसमायुताः ॥५१९॥
सप्ताहं भावयेत्तेन शुल्वपत्राणि लेपयेत् ।
अष्टांशे नागसंयुक्ते तेन तद् भाव्यते सुखम् ॥५२०॥
सुक्तसंधानसिक्तं तु दोषहीनं सितं भवेत् ।
रक्तपीतं विनिर्मुक्तं त्रिगुडा[णा]दिविवर्जितम् ॥५२१॥
पादांशं योजितं तारमथार्द्धेन गुणावहम् ।
मासमेकं तु विश्रान्तं तद्भवेत्तु निरंजनम् ॥५२२॥
पट्टुक्षारसमायुक्तानम्लवर्गेण भावितान् ।
पातयेदूर्ध्वयंत्रेण रसबीजविहीनकान् ॥५२३॥

ततो रसं सबीजं तु योजयेदम्लपेषितम् ।
पातनास्तु त्रयः कार्याः शुल्बे चैवं तु दापयेत् ॥५२४॥
दशांशेन त्रीन्वारांश्च पत्रलेपेन साधितान् ।
पंचमांशेन भवति सितं तत्सांजनं शुभम् ॥५२५॥
अर्द्धेन तु समायुक्तं विश्रान्तं तु निरंजनम् ।
रसाश्चोपरसाश्चैव लवणक्षारसंयुताः ॥५२६॥
हेमगामिनः कर्त्तव्याः शुद्धाम्लेन तु भावयेत् ।
पातयेदूर्ध्वयन्त्रेण त्रिवारं च प्रयत्नतः ॥५२७॥
सबीजं सूतकं योज्यमारोटमम्लपेषितम् ।
रक्तस्नेहेन संयुक्तं तारारिष्टे पुटे पचेत् ॥५२८॥
तारशेषं भवेद्धेम हेमार्द्धेन तु योजयेत् ।
तारं वा मुनिसंख्यातं हेमार्द्धात्कनकं महत् ॥५२९॥
दरदाहतं सुतीक्ष्णं च कांक्षीकं कुष्टसंयुतम् ।
अम्लेन पेषयित्वा तु कटुतुम्बे निधापयेत् ॥५३०॥
सार्द्रे क्षितौ निधातव्यं गोमूत्रेण तु सन्धितम् ।
सिते हेम तु वापेन षोडशांशं त्रिधा कृतम् ॥५३१॥
रक्ततैले निषिक्तं तु वर्णद्वयगुणावहम् ।
दानवेन्द्रहतं सूर्यं कांक्षीकं कुष्टभूयुतम् ॥५३२॥
अम्लेन पेषयित्वा तु रक्तस्नेहे नियोजितम् ।
मासं तु निहितं भूमौ सक्षारे तु तथोद्धरेत् ॥५३३॥
तेन वाप्य सितं हेम षोडशेन त्रिधा कृतम् ।
पत्रलेपेन वासिद्धं रक्ततैले निषेचितम् ॥५३४॥
हेमोत्कर्षमिदं श्रेष्ठं धूपनैवेद्यकारणैः ।
सौवीरस्याथ वक्ष्यामि यथाकर्म व्यवस्थितम् ॥५३५॥

पूर्वशुद्धं समादाय पट्टुक्षारसमायुतम् ।
अम्लस्नेहेन संभाव्य तुत्थे तु ज्वलिते क्षिपेत् ॥५३६॥

ध्मातं गुहागतं वाथ काष्ठके वा निपातयेत् ।
तद्गृह्य सत्त्वं विधिवद्योजयेन्मधुसर्पिषी ॥५३७॥

ध्वांक्षविट्सृष्टिसंयुक्तं तीक्ष्णपत्राणि लेपयेत् ।
अग्निवर्णानि मूषायां कर्कटाह्वि[घ्रि]विलेपिते ॥५३८॥

तत्क्षिपेत् समयोगेन तत्सत्त्वं तत्र संविशेत् ।
गोलकं च भवेत्तीक्ष्णमभ्रकं स्फुटति मृदुः ॥५३९॥

तीक्ष्णपत्राणि संलिप्य त्वग्निवर्णानि बुद्धिमान् ।
निक्षिपेत्तत्र वङ्गं तु शुद्धं तीक्ष्णं विशेत् क्षणात् ॥५४०॥

तद् गृह्य तेन संयुक्तमेकत्रैव नियोजयेत् ।
ध्वांक्षविट्सृष्टिसंयुक्तं कंकुष्ठं विषलांगलीम् ॥५४१॥

कुलीरांघ्रिसमायुक्तं योजयित्वा तु धामितम् ।
पुनस्तेनैव योगेन तारांशेन तु योजयेत् ॥५४२॥

तेनैव योजयेत् सूतं सृष्टित्रयनियोजितम् ।
समांशेन तु तेनैव त्वम्लसत्त्वोर्ध्वपातितम् ॥५४३॥

रसोनयुक्तं पिंडालं सितमाठरयोजितम् ।
पीलुमोक्षकभस्म च हयोष्ट्रजलगालितम् ॥५४४॥

पट्टसामुद्रसंयुक्तमूर्ध्वयन्त्रेण पातयेत् ।
सप्तवाराणि पिंडालं यावच्छङ्खनिभं भवेत् ॥५४५॥

समं तु योजयेत्तत्र सृष्टित्रयसमायुतम् ।
वङ्गारविन्दवेधं तु अष्टषोडशभागशः ॥५४६॥

पट्टु तक्रे निषिक्तं तु तिन्तिणीफलसंयुते ।
तत्तारं तु भवेद्दिव्यं तुत्थास्ये किंचित्सांजनम् ॥५४७॥

पट्टयुक्तं सुविश्रान्तं मासमेकं क्षितौ गतम् ।
निरंजनं भवेत्तारं महद्भूतिप्रदायकम् ॥५४८॥

तदेव चारयेत् सूतं समांशं हेमनिर्गतम् ।
तारं तु सारयेत्तेन चतुःषष्टिगुणं खख[ग]म् ॥५४९॥

वङ्गं वा षोडशांशेन तारं भवति शोभनम् ।
तद्विधः शतवेधी स्याच्छुल्वे वंगे तदर्द्धकम् ॥५५०॥

उत्तरोत्तरकर्म्माणि सहस्रलक्षधा रसः ।
नियुक्तः कुरुते तारं हेमयोगेन हाटकम् ॥५५१॥

पातयेच्चांजनं सत्त्वं तालकोक्तेन वा बुधः ।
आलसत्त्वं समोपेतमम्लेन तु सुभावितम् ॥५५२॥

पंचमांशात्खखं[गं] विद्धं त्रीन्वारांस्तु निषेचितम् ।
पट्टुक्षारयुते तक्रे तिन्तिणीफलसंयुते ॥५५३॥

रक्तपीतविनिर्मुक्तं भूगंडेन विवर्ज्जितम् ।
सांजनं संभवेत्तारं ताराद्धेंन नियोजितम् ॥५५४॥

पूर्वशुद्धं तु सौवीरं पट्टुक्षारनियोजितम् ।
कंकुष्ठांशेन संयुक्तं क्षारतोयाच्च योजितम् ॥५५५॥

तीक्ष्णचूर्णं समं योज्य रम्भाकन्दजलेन तु ।
पेषयित्वान्धितं ध्मातं तच्चोरगसमं भवेत् ॥५५६॥

तत्समं योजयेत्तारे सारयेत्तेन सूतकम् ।
नियामिके स्थितं तैले आरोटं [-चैव] यत्नतः ॥५५७॥

सृष्टित्रययुतं पिष्ट्वा तद्रसं षोडशांशतः ।
खं खं [खगं] तारं तु कुरुते वङ्गे षष्ठांशयोजितम् ॥५५८॥

सितपादेन संयुक्तं[-तारं तत्] सांजनं भवेत् ।
संन्यस्तं मासमेकं तु विशेषेण गुणोदयम् ॥५५९॥

द्वात्रिंशवेधी भवति शुल्वे वङ्गे च षोडशम् ।
उत्पलं षोडशांशेन तारं हेम तु शोभनम् ॥५६०॥

चारणाज्जारणा कार्या सूतकस्य समासतः ।
सारणं तारशेषेण चतुःषष्टिगुणोदयम् ॥५६१॥

चंपके उत्पले चैव भवेद् द्वात्रिंशद्वेधकः ।
तद्विधः शतवेधी स्यात्तदर्द्धेनोत्तरो रसः ॥५६२॥

विंधेद्वै तारस्वर्णं तु संभवेत् शोभनं वरम् ।
उत्तरोत्तरकृत्येन सहस्रेण तु लक्षधा ॥५६३॥

कोटिवेधी भवेत् सूतो विधिनानेन तारकृत् ।
तीक्ष्णांजनं समं ध्मातं टंककंकुष्ट ईसियुक्[संयुतम्] ॥५६४॥

भवेदुरगसंकाशं तच्छुल्वे वापयेत् समम् ।
सितसंधानसिक्तं तु तारमर्द्धेन सांजनम् ॥५६५॥

चंपकोत्पलसंयुक्तं द्विगुणं वाथ वाहयेत् ।
तानि तारत्वमायान्ति पादांशेन न संशयः ॥५६६॥

तद्वीजं तारहेम्नाथ सूतके समचारितम् ।
सारितं चैव विश्रान्तं मासमेकं क्षितौ गतम् ॥५६७॥

षोडशेन तु भागेन पंचकोत्पल आर्त्तवम् ।
तारं हेम भवेद्दिव्यं षोडशांशेन वीजितम् ॥५६८॥

तीक्ष्णांजनं तु मिलितं तारे हेम नियोजितम् ।
चारयेत् सूतके तं तु वीजशेषेण कारयेत् ॥५६९॥

शतवेधी भवेदेष उत्तरेणोच्चवेधकृत् ।
तस्योपयोगः कर्त्तव्यो माषकाद्युत्तरोत्तरम् ॥५७०॥

संवत्सरेण एकेन भवेदुत्पलसन्निभः ।
दिव्यदेहो बलोपेतो जरामयविवर्जितः ॥५७१॥

महाकल्पायुषो भूत्वा तिष्ठेद्धि क्षितिमण्डले ।
रसायने विशेषेण हेमकारि रसोत्तमः ॥५७२॥
उद्रु[क्त]क्षारत्रयं ग्राह्यं गजोष्ट्रहयका[वा]रिणा ।
गालयित्वा क्षिपेत्तत्र चूलिकालवणं शुभम् ॥५७३॥
सौवर्चलमलाभेन त्रिकटुहिङ्गुटङ्कणम् ।
गन्धकं तु सितं भाव्यं सप्तधा पीतकं हि वा ॥५७४॥
सिते पीतेऽथ कर्म्माणि तद्विडं जारणे शुभम् ।
दोलाकच्छपकन्दे[यंत्रे] वा अग्निमूषोदरे[रे]ऽथवा ॥५७५॥
जारयेत् सर्वलोहानि क्षितिकासीसकेन युक् ।
गर्भद्रुतिकरो ह्येष मर्द्दनादग्निमूष्मणा ५७६॥
रसायने कृतः सूतो द्रव्ययोगे नियोजयेत् ।
रसायने विडोऽप्यन्यो रसोपरसयोजनात् ॥५७७॥
यथालाभेन कर्त्तव्यस्त्वम्लवर्गेण भावितः ।
शुल्के[ल्वे]न रक्तवर्गेण द्रावित्वा कर्म भावयेत् ॥५७८॥
पीतैः सितैस्तु कर्त्तव्यो जारणार्थं रसायने ।
नागवंगैः कृतं सूतं द्रव्ययोगेन योजयेत् ॥५७९॥
रसायनेन कर्त्तव्यो द्रव्यार्थं सूतकः कृतः ।
द्रव्यौषधिसमायोगाद्यथावद्धस्तु सूतकः ॥५८०॥
बीजयुक्तोऽथ निर्बीजो बिडं तथा नियोजयेत् ।
रसायनेषु प्रवरो दिव्यौषधिकृतो रसः ॥५८१॥
एवं ज्ञात्वा विधानेन सूतको मंत्रदीपितः ।
रसायनेषु भोक्तव्यः सिद्धिं युक्तिमवाप्नुयात् ॥५८२॥

इत्याद्ये स्वच्छन्दशक्त्यावतारे शतसाहस्र्यां गोरक्षसंहितायां भूतिप्रकरणे
रसोपरसकर्माधिकारो नाम
षष्ठः पटलः ॥ ६ ॥

# सप्तमः पटलः

शक्तिरुवाच

दिव्यौषध्यस्तु याः प्रोक्ताः शर्वजस्य निबन्धने ।
रसे रसायने चैव कति नाम्न्यस्तु कीदृशः ॥ १ ॥
तासां किं लक्षणं देव कर्म चैव वद प्रभो ।

श्रीकण्ठ उवाच

अचिन्त्यमौषधीवीर्यं सूतकस्य निबन्धनम् ॥ २ ॥
अचिन्त्यं मन्त्रवीर्यं तु मन्त्रयुक्तं नियोजयेत् ।
सूतकस्य नियुक्तास्ते विधिं ज्ञात्वा तु मन्त्रितम् ॥ ३ ॥
कुर्वन्ति तत्क्षणाद्बन्धं दिव्यौषध्यो न संशयः ।
औषध्यस्तु समाख्याता महौषध्यस्तथा परा ॥ ४ ॥
रसौषध्यः समाख्याता दिव्यौषध्यः प्रकीर्त्तिताः ।
तासां दिव्यौषधीसंज्ञा सर्वासां च प्रकीर्त्तिता ॥ ५ ॥
तृणगुल्मलतावल्लीवृक्षजातिर्विसर्प्पिणी ।
षड्विधास्ताः समाख्याता लक्षणानि बिदुर्बुधाः ॥ ६ ॥
सोमा सोमोपमा दिव्या रसौषधिर्महाबला ।
भुजंगाकार[रा] सा प्रोक्ता रक्तपर्वसमन्विता ॥ ७ ॥
रसं रक्तं विमुंचेद्धि पत्रैः पंचदशान्विता ।
सोमवृक्षस्तथा वल्ली द्विविधा सा प्रकीर्त्तिता ॥ ८ ॥
द्वयोः समानं वीर्यं तु वल्ली भवति शोभना ।
दश पंच च पत्राणि पौर्णिमायां भवन्ति हि ॥ ९ ॥

अशाखा च भवेद्वल्ली तस्याः कन्दो बृहद्भवेत् ।
कृष्णपक्षे दलं तस्य एकैकं चैव हीयते ॥ १० ॥

अमावास्यायां न किं[चित्] स्याद्रसं बध्नाति तत्क्षणात् ।
पौर्णमास्यां गृहीतव्या रसे चैव रसायने ॥ ११ ॥

रसेन तस्याः संयुक्तो हेम्ना च विनियोजितः ।
अधमूर्ष[अन्धमूषा]गतो ध्मातो बध्यते तत्क्षणेन तु ॥ १२ ॥

विन्धति सर्वलोहानि कोट्यंशाद्धेमकारकः ।
रसायने रसे योज्यः पलात्कल्पायुषप्रदः ॥ १३ ॥

रसबीजस्य लाभेन रसं तस्या रसायने ।
मध्वाज्ययुक्तं मासेन दिव्यदेहो भवेन्नरः ॥ १४ ॥

सोमवृद्ध्या तु खादेद्यो रसं तु कलमानतः ।
हीयते सोमवृद्ध्या तु मासेन पुरुषो भवेत् ॥ १५ ॥

त्वग्दन्तनखकेशैस्तु मुच्यते जरया भृशम् ।
मध्वाज्येन युतं देहे वातातपविवर्जनात् ॥ १६ ॥

रक्षयेत् त्रिगुणं कालं ततो दिव्यत्वमाप्नुयात् ।
तथा बद्धेन सूतेन पलेनैकेन दिव्यता ॥ १७ ॥

त्वग्दन्तनखराः केशाः पूर्वजाऽपि नवाः शुभाः ।
दिव्यदेहमवाप्नोति महाकल्पायुषो बली ॥ १८ ॥

सोमवल्लीविधानेन सर्वेषां तु क्रमोदितः ।
स्थलजा पद्मिनी चान्या स्थले तद्धू[ द्रू ]पधारिणी ॥ १९ ॥

पुष्पमकर्णिकं तस्या उक्तकर्मकृताद्भवेत् ।
रसे रसायने चैव सबीजं बन्धते रसम् ॥ २० ॥

तथान्याजगरीनाम विख्याता तु महौषधीः ।
तत्सादृश्याद्भवेद्वल्ली मंडलैश्च विचित्रिता ॥ २१ ॥

स्व[स]क्षीरा स्वल्पपत्रा च सूतकस्य निबन्धनी ।
गोनसी गोनसाकारा सक्षीरा सूतबन्धिनी ॥ २२ ॥
उच्चटा शुकसाकारा उक्तकर्म्मप्रसाधनी ।
ईश्वरी नागवल्ली च रक्तक्षीरप्रवाहिनी ॥ २३ ॥
भूतकेशी भवेद्वल्ली निम्बपत्रविधि[चि]त्रितैः ।
मूले कृष्णा विषहरा कृष्णवल्लीति चोच्यते ॥ २४ ॥
भूकदम्बेति विख्याता फलैर्जीरकसंनिभैः ।
कुसुम्भसदृशैः पुष्पैः चक्रारकचसंस्थितैः ॥ २५ ॥
मूलैर्बह्निशिखाकारैः सूतकस्य निबन्धनी ।
नाम्ना चांशुमती चान्या रुदन्ती प्रथिता तु सा ॥ २६ ॥
चणकाभा भवेत् सा तु तत्पत्रा च सुतेजसा ।
तदाकारं तु कुसुमं पत्राग्रे तोयबिन्दवः ॥ २७ ॥
रसबन्धकरी सा तु विख्याता च महौषधीः ।
औषधी संवरी नाम शिलातलसमुद्भवा ॥ २८ ॥
स्नुहीपत्रोपमैः पत्रैर्नैवं बहुभिः संचितैः ।
ईषदेवोर्ध्वमुत्तिष्ठेत्स्निग्धपत्रा पयस्विनी ॥ २९ ॥
शाखामृगाणां सा भक्ष्या रसबन्धकरी भवेत् ।
बाराही चैव तद्रूपा तत्कन्दा श्रुतिपर्णजा ॥ ३० ॥
सक्षीरा लोमशा सा तु शर्वजस्य निबन्धनी ।
पाथोन्नकी(?) भवेच्चान्या जायते पर्वते तु सा ॥ ३१ ॥
पारिभद्रसमैः पत्रैः तत्पुष्पा क्षीरिणी भवेत् ।
बल्ली सा तु समाख्याता औषधी रसबन्धनी ॥ ३२ ॥
शतपर्वा भवेच्चान्या बहुपर्वा समातृका ।
अश्वत्थसदृशैः पत्रैर्वल्ली सा तु पयस्विनी ॥ ३३ ॥

आम्रातकी भवेच्चान्या दिव्यौषधी महाबला ।
आम्रपत्रोपमैः पत्रैर्वल्ली नातिविसर्प्पिणी ॥ ३४ ॥
त्रिपत्रा नाम चान्या तु क्षीरिणी सा त्रिपत्रिका ।
काचीर[करवीर ?] पत्रसदृशा कन्दतो नालतः समा ॥ ३५ ॥
अशोका नाम सक्षीरा विख्याता सा महौषधीः ।
अशोकसदृशैः पत्रैः पुष्पैस्तत्सदृशैर्लता ॥ ३६ ॥
पुंनागपत्रिका चान्या वल्ली चाति पयस्विनी ।
पुंनागसदृशैः पत्रैर्गन्धतः सुरभिर्भवेत् ॥ ३७ ॥
तत्पुष्पा जायते सा तु वल्ली सूतनिबन्धनी ।
तथान्या नागिनी नाम [-सा] तारा रोहिणी भवेत् ॥ ३८ ॥
सर्पाकारा लता सा तु श्लक्ष्णपर्णा पयस्विनी ।
छत्री चान्या तु सक्षीरा नात्युच्चा छत्रवद्भवेत् ॥ ३९ ॥
एकपत्रा सकन्दा तु दिव्यौषधिर्महाबला ।
सवरी नाम चान्या तु गुल्मजातिर्वनोद्भवा ॥ ४० ॥
नंदिकावर्त्तसदृशी चातिक्षीरा महौषधीः ।
पत्रैः पुष्पैश्च नात्युच्चैः क्षणात्सूतकबन्धनी ॥ ४१ ॥
देवी नाम्ना च विज्ञेया ईषदेव लता मृदुः ।
पालंकपत्रसदृशी क्षीरिणी च महौषधीः ॥ ४२ ॥
बज्रवल्ली समाख्याता तत्पुष्पा क्षीरिणी भवेत् ।
स्नुहीपत्रोपमैः पत्रैः क्षणात्सूतकबन्धनी ॥ ४३ ॥
तथान्यश्चित्रकः कृष्णः क्षीरं कृष्णीकरोति सः ।
कृष्णपुष्पश्च गोप्ता च सूतकस्य च बन्धकः ॥ ४४ ॥
पलाशवल्ली नामान्या पीतवर्णा महौषधीः ।
पलाशपल्लवाकारैः पत्रैर्म्मरकतप्रभैः ॥ ४५ ॥

कन्देन मुस्तकाकारा भिन्ना सा रजनिप्रभा ।
पीतं रसं विमुञ्चेत्तु सूतकस्य निबन्धनी ॥ ४६ ॥
ताराजा(?) नाम विख्याता निष्पत्रोत्तिष्ठते तु सा ।
ईषदूर्ध्वं प्रसरति रसबन्धकरी वरा ॥ ४७ ॥
द्विरत्निमात्रा वृत्ता च कृष्णपुष्पी महौषधीः ।
कालकर्णी तथा चान्या वल्ली सा कुमुदी यथा ॥ ४८ ॥
स्थलजा पर्व्वतोद्भूता सूतकस्य निबन्धनी ।
नीलोत्पला तु विज्ञेया नीलोत्पलनिभा भवेत् ॥ ४९ ॥
जायते पर्व्वते सा तु रसबन्धकरी भवेत् ।
रजनी नामतो ज्ञेया कुमार्या तुल्यकण्टका ॥ ५० ॥
हारिद्रपत्रा सक्षीरा सूतकस्य च बन्धनी ।
तथान्या सिंहिका नाम पीतपुष्पा पयस्विनी ॥ ५१ ॥
निदिग्धिकाकृतिः सा तु महौषधीरुदाप्लु[हृ]ता ।
मेदिनी[-ना]म चान्या तु पीतवर्णा सकन्दका ॥ ५२ ॥
कुलत्थपत्रा सक्षीरा भवेत् सूतकबन्धनी ।
तथान्या तिलका नाम लता सा तु पयस्विनी ॥ ५३ ॥
तिलपुष्पपत्रसदृशा शर्वजस्य निबन्धनी ।
क्षिप्रानाम तथान्या तु लता सा च पयस्विनी ॥ ५४ ॥
बीजपूरदलाकारा पुष्पैश्चित्रकसन्निभैः ।
गजदन्ताकृतिः कन्दः सिता क्षीरं विमुञ्चति ॥ ५५ ॥
महौषधी समाख्याता रसबन्धकरी क्षणात् ।
नरदेवी समाख्याता क्षता स्नेहं विमुंचति ॥ ५६ ॥
स्नुहीपत्रोपमैः पत्रैश्चतुर्भिश्च महौषधी ।
यवाकारं भवेत्पुष्पं ज्ञेया सूतकबन्धनी ॥ ५७ ॥

गोश्रृंगीनाम चान्या तु लता सा पीतपुष्पिका ।
गोकर्णाकारपत्रा तु रत्निमात्रा विधीयते ॥ ५८ ॥
सक्षीरा तु शिलोद्भूता पर्व्वते जायते तु सा ।
गोश्रृंगाकारकेयं तु सूतकस्य निबन्धनी ॥ ५९ ॥
ज्ञेया महौषधी दिव्या नाम्ना खदिरपत्रिका ।
पीता हरितसंकाशा रक्तपुष्पा सुतेजसा ॥ ६० ॥
क्षता रक्तं विमुञ्चेत्सा सूतकस्य निबन्धनी ।
ज्योतिस्तृणो ज्योतिर्वृक्षो ज्योतिष्कन्दश्च ते त्रयः ॥ ६१ ॥
ज्वलन्ति पर्व्वतोद्भूता सूतकस्य निबन्धकाः ।
रक्तवल्ली तथा चान्या रक्तपत्रा महौषधीः ॥ ६२ ॥
रक्तस्रवा च रक्तांगी वल्ली चाति विसर्प्पिणी ॥ ६३ ॥
तिन्तिणीपत्रसदृशा भवेत् सूतकबन्धनी ।
ब्रह्मदण्डी लता ख्याता सक्षीरा कन्दवत्यपि ॥ ६४ ॥
ईषद्वितिष्टते भूमौ यष्टिवच्च व्यवस्थिता ।
तत्पत्रं कण्टकाकीर्णं रसबन्धकरी भवेत् ॥ ६५ ॥
पद्मदण्डीति विख्याता पद्मनालाकृतिर्लता ।
ईषद्वितिष्ठते भूमौ क्षीरिणी कन्दवत्यपि ॥ ६६ ॥
तत्पत्रं कण्टकाकीर्णा[र्णं] रसबन्धकरी भवेत् ।
ज्ञेया मधुतृणा चान्याऽल्पपत्रा सिक्तकाकृतिः ॥ ६७ ॥
सुषिरैस्तु समाकीर्णा मधुगन्धा महौषधीः ।
क्षुद्रा माक्षिकसंकीर्णा सूतकस्य निबन्धनी ॥ ६८ ॥
हेमदंडा भवेच्चान्या लता सा क्षीरिणी भवेत् ।
पीतक्षीरा च पुष्पा च पत्रैश्चित्रकसंभवैः ॥ ६९ ॥

ताम्बूलपत्री तत्पत्रा रक्तक्षीरार्कपुष्पिका ।
रसौषधी महावीर्या रसबन्धकरी भवेत् ॥ ७० ॥

तथान्या श्रीजयानाम दिव्यौषधिर्महाबला ।
कलम्बिकापत्रसदृशा ईषदेव लता भवेत् ॥ ७१ ॥

रक्तक्षीरा महावीर्य्या रसबन्धकरी भवेत् ।
तथान्या विजया नाम ईषदेव विसर्प्पिणी ॥ ७२ ॥

आढकीपत्रसदृशा शुष्कक्षीरा च सा भवेत् ।
महौषधी समाख्याता ह्याशु गृह्णाति सूतकम् ॥ ७३ ॥

जयानाम्नी तु विख्याता रसौषधिर्महोत्तमा
त्रिकोणतिक्तकटुका वल्ली चित्रकपत्रवत् ॥ ७४ ॥

देवश्रीर्नामतश्चान्या विख्याता तु महौषधीः ।
शिखिकण्ठनिभैः पत्रैर्नीलैश्चन्दनगन्धिभिः ॥ ७५ ॥

रसेन तिक्तं तन्मूलं नवनीतसुगन्धकम् ।
सक्षीरा रक्तपुष्पा तु रसबन्धकरी भवेत् ॥ ७६ ॥

तन्मूलं गोपनं ख्यातं स्ववर्त्मनि मुखे गतम् ।
कीटमारी समाख्याता गुल्मादी यत्समुद्भूता ॥ ७७ ॥

शिग्रुणा समपत्राढ्या सक्षीरा तु महौषधीः ।
कीटानि जिघ्रतो हन्याद्रसबन्धकरी भवेत् ॥ ७८ ॥

व्याघ्रीनाम महावीर्या नीलपुष्पा सकंटका ।
बहुपत्रा समैः पत्रैः शर्वजस्य निबन्धनी । ७९ ॥

वल्ली तु गारुडीनाम सक्षीरा पीतपुष्पिका ।
वदरीसदृशैः पत्रैः सूतकस्य निबन्धनी ॥ ८० ॥

तथान्या तुम्बिनी नाम तत्पुष्पा तरुगामिनी ।
तुम्बिनीपत्रसदृशैर्म्महावल्ली पयस्विनी ॥ ८१ ॥

सुरक्ता त्वौषधी दिव्या बन्धनी सा रसस्य तु ।
द्वितीया तुम्बिनी सा तु सक्षीरा भूमिगर्भगा ॥ ८२ ॥

तुम्बिनी फलसादृश्यात्क्षुद्रा सा रसबन्धनी ।
तथा वरुणलतातुल्या ईषदेव लता मता ॥ ८३ ॥

हलिनीपुष्पसदृशा सक्षीरा रसबन्धनी ।
अन्या हेमलता नाम पीतपुष्पा लता भवेत् ॥ ८४ ॥

मूलकापत्रसदृशा रक्तक्षीरा महौषधीः ।
आसुरी नामतो ज्ञेया तुम्बिनीसमपुष्पिकाः ॥ ८५ ॥

पंचांगुलीसमापत्रा पीतक्षीरा महौषधीः ।
गंधर्वी नामतो ज्ञेया वल्ली सा क्षीरिणी भवेत् ॥ ८६ ॥

सप्तच्छदसमैः पत्रैर्महावीर्या महौषधीः ।
गोमारी नाम विख्याता वल्ली सा वेणुपत्रिका ॥ ८७ ॥

क्षीरिणी रक्तपुष्पा तु महौषधीरुदाहृता ।
शरीषा नाम तत्पत्रा लता सा क्षीरिणी भवेत् ॥ ८८ ॥
वनकुस्तुम्बरी चान्या क्षीरिणी पीतपुष्पिका ।
तदाकारा भवेत् सा तु सूतकस्य निबन्धनी ॥ ८९ ॥

त्रिशूली तु भवेच्चान्या वल्ली नातिविसर्प्पिणी ।
पत्रैः शूलोपमा ज्ञेया व्याधिघातफलोपमा ॥ ९० ॥

धरसीपत्र( ? ) संकाशा जायते सा नगस्थले ।
सक्षीरा कंदवती च सूतकस्य निबन्धनी ॥ ९१ ॥

त्रिदंडी नाम चान्या च त्रिदंडादूर्ध्वगामिनी ।
त्रिपत्रा रक्तवर्णा च महौषधीरुदाहृता ॥ ९२ ॥

भृङ्गा भृङ्गसमाकारा पीतपुष्पा पयस्विनी ।
चमरी चमराकारा क्षीरिणी कन्दवत्यपि ॥ ९३ ॥

रक्तवर्णा सिता चैव दिव्यौषधीरुदाहृता ।
करवीरी वलानाम रक्तक्षीरा महौषधीः ॥ ९४ ॥

करवीरपत्रपुष्पा सूतकस्य निबन्धनी ।
वज्रानाम समाख्याता क्षीरिणी कन्दवत्यपि ॥ ९५ ॥

कोरण्टपत्रसदृशा तत्पुष्पा कटुतिक्तका ।
महौषधीः समाख्याता रसबन्धकरी भवेत् ॥ ९६ ॥

पीतमुस्तकिका नाम तत्पत्रा पीतदुग्धिका ।
तदाकारं भवेत्कन्दमौषधी रसबन्धनी ॥ ९७ ॥

वीरवल्ली तथा चान्या रक्तक्षीरा महौषधीः ।
श्रीफलस्य दलाकारा रसबन्धकरी भवेत् ॥ ९८ ॥

तथान्या रोहिणी नाम वल्ली क्षीरविमोचनी ।
शणपुष्पपत्रसदृशा महावीर्या महौषधीः ॥ ९९ ॥

विल्वातकी तथा चान्या ज्योतिष्काकारपत्रिका ।
सक्षीरा तु महावल्ली रसबन्धकरी भवेत् ॥१००॥

गोरोचना भवेच्चान्या वल्ली गोरोचनाप्रभा ।
स्पृष्टा रजो विमुंचेत्तु पीतं गोरोचनप्रभम् ॥१०१॥

सक्षीरा औषधी दिव्या रसबन्धकरी भवेत् ।
शल्यामयसमाख्याता पुष्पैश्चैव सकंटकैः ॥१०२॥

एकपत्रा भवेत् सा तु लता कन्दवती भवेत् ।
गृह्णाति सूतकं क्षिप्रं महौषधी महाबला ॥१०३॥

त्रिशल्या नामतः ख्याता लता कन्दवती भवेत् ।
शिल्याकारा त्रिपत्रा च जायते पर्व्वतोपरि ॥१०४॥

सक्षीरा कंटकैर्हीना स्पर्शनात् फलमोचनी ।
दिव्यौषधिर्महावीर्या रसबन्धकरी भवेत् ॥१०५॥

चतुष्षष्टि समाख्याताः औषध्यः सुरपूजिताः ।
महावीर्या महापुण्याः सर्वकामप्रदायकाः ॥१०६॥
एषां वीर्यमचिन्त्यं तु तपसा पुण्यसंचयात् ।
प्राप्तिर्भवति तेषां तु दुष्प्रापास्तपोवर्जितैः ॥१०७॥
स्वच्छन्दः शक्तिसंयुक्तो भक्त्या येन प्रपूजितः ।
स्वच्छन्दोक्तविधानेन तस्याः प्राप्तिस्तु जायते ॥१०८॥
स्ववीर्यशक्तिभिः सर्वैः किंचिन्मात्रं विगृह्य च ।
सर्वभूतहितार्थाय धरण्यां तु निवेशितुम् ॥१०६॥
तेषां क्षेत्रं तु विज्ञेयं गिरिकन्दरगह्वरे ।
पर्व्वतानां च शिखरे द्वीपे चैवोदधौ स्थितिः ॥११०॥
स्वयं भूतेषु लिङ्गेषु पर्व्वतेषु भवन्ति ताः ।
विवरद्वारमाश्रित्य विशेषेण भवन्ति ताः ॥१११॥
तुहिनाद्रेः परे चैव प्रभूतास्तृणवच्च ताः ।
मेरोः पार्श्ववने तास्तु नागास्तद्भूमिसंस्थिताः ॥११२॥
भवन्ति विविधाकारा औषध्यस्तृणवत्स्थिताः ।
कुमारीद्वीपसंस्थास्तु उपद्वीपेषु पर्व्वताः ॥११३॥
तत्र रम्यप्रदेशेषु औषध्यः संभवन्ति ताः ।
प्राप्नुवन्ति महापुण्याः शिवाराधनतत्पराः ॥११४॥
गृहीतव्यास्तु औषध्यः शक्तिबीजैः पृथक् पृथक् ।
यथाक्रमेण शक्तानां फलान्यौषधिरूपतः ॥११५॥
संस्थिताः क्रमशो ज्ञेया गृह्णीयाद्बीजनामतः ।
माया तु सांजना वाप्य ग्रहणे योजयेद् बुधः॥११६॥
निरंजनाया घोरेण दिशास्त्रेण तु तर्ज्जयेत् ।
कामिकायाथ संगृह्य समयं स्मर शाम्भवम्[वि] ॥११७॥

अष्टम्यां वा चतुर्दश्यां पौर्णिमायां द्विपक्षयोः ।
सौमा[म्या]र्कार्ह्वेऽथ वा ग्राह्या पुष्ये हस्तेऽथ गृह्यते ॥११८॥
व्यतीपाते गृहीतव्याः पूजियत्वा च मंत्रिताः ।
गृहीत्वा कारयेत् कर्म्मं विशेषेण ब्रवीमि ते ॥११९॥
मेघकान्तं च माक्षीकं दरदं विमलं तथा ।
शिलाकासीसमादाय गन्धकं तु सुचूर्णितम् ॥१२०॥
सूतकं नवमं दद्यात् सर्वेषां भागतः समम् ।
कृत्वा लोहकटोरे तु सोष्मे घर्मे क्षणं बुधाः ॥१२१॥
बीजं रसेन संयुक्तमादौ प्रोक्तं तु यन्मया ।
रसोपरसहीनैस्तु तत्कर्म भवति स्फुटम् ॥१२२॥
रसोपरसयोगेन बीजहीनं तु बन्धनम् ।
क्षणाद्बन्धो भवेदेव औषधी रसयोजितः ॥१२३॥
अग्निना शुष्यते पात्रं तावद्बद्धो भवेद्रसः ।
रसांश्चोपरसांश्चैव शुष्कचूर्णं तु कारयेत् ॥१२४॥
रेन[एनं] क्षिपेद्वंशनाड्यां ततो देशान्तरं व्रजेत् ।
आवर्त्य सर्वलोहानि लक्षांशेन तु वेधयेत् ॥१२५॥
कनकं च भवेद्दिव्यं तारं वा श्वेतयोगतः ।
पूर्णवित्तो महापुण्यो भुवनेष्वखिलेष्वपि ॥१२६॥
ईश्वरैस्तु सुरैः सिद्धैर्वन्द्यते च नृपैर्वरैः ।
मध्वाज्येन समं तं तु दिने निष्पावमात्रकम् ॥१२७॥
खादयेद्विषुवे योगे त्वग्निषोमीयमन्त्रितम् ।
सप्तादित्यतनुर्भूत्वा महार्चिः खेचरो भवेत् ॥१२८॥
अणिमादिगुणाढ्या[ढ्यो]स्तिर्जायते नात्र संशयः ।
महौषधीः पेषयित्वा मध्वाज्येन लिहेद् बुधः ॥१२९॥

मासद्वयेन सिद्धस्तु महाबलपराक्रमः ।
महाकल्पायुषो वीरः सुरासुरनमस्कृतः ॥१३०॥
सर्वा विषहराः ख्यातास्तथा शल्यहरा इमाः ।
वन्ध्यानां पुत्रदाः ख्याताः शस्त्राणां चैव रक्षकाः ॥१३१॥
मध्वाज्यसहिताः पीताः वज्रदेहत्वकारकाः ।
क्षरेच्च वनिता लेपात्पीताद् ध्वजसमुच्छ्रयम् ॥१३२॥
मुखस्था वारयेच्छुक्रं लेपात् कुष्ठविनाशिनी ।
छिन्ना-[नां वै] महास्त्रैश्च तत्क्षणाद् व्रणरोहिणी ॥१३३॥
अमृतोपमा महौषध्यो लवमात्रा तु सिद्धिदा ।
एवं लक्षणतः ख्याताः कर्मतश्च महोदयाः ॥१३४॥
मणिकान्तविधानेन दिव्यौषधिबलेन वा ।
दानवेन्द्रवसायोगात् क्षणाद्बध्येत सूतकः ॥१३५॥
प्रोक्तः पूर्वमसौ योग्यो हठबद्धो रसायने ।
क्रमात्क्रमान्मृतीभूतो महदायुःप्रदो भवेत् ॥१३६॥
महामणिनियोगेन रसश्चोक्तो रसायने ।
सूर्यकान्तेऽयस्कान्ते तुत्थाकेऽन्याप्रलेपनात् ॥१३७॥
सबीजं निक्षिपेत्तत्र शर्वजं तस्य चोपरि ।
चन्द्रकान्तं मणिं दद्यात् पूर्णिमायां समारभेत् ॥१३८॥
स्थानोन्नतं समाश्रित्यावकाशेन निधापयेत् ।
करीषाग्निगता तुत्था धरामूषा बहिःस्थिता ॥१३९॥
चन्द्रोदये सितैः पुष्पैः पूजयित्वा च भक्तितः ।
अमृताद्यं जपेत् घोरं दत्त्वा रक्षां तु रक्षणम् ॥१४०॥
सहस्रं तु जपेद्धोरं ध्यात्वा सोमसमप्रभम् ।
जलामृतं विमुंचेद्वै चन्द्रकान्तो मणिर्महान् ॥१४१॥

तेनैव च समायोगादमृतीभवते रसः ।
क्रमाद्वज्री भवेत् सूतो नित्यं सोमोदये जपेत् ॥१४२॥
एवं विधानतः कार्यं दश पंच च पूर्णिमाः ।
ततो वज्रीभवेत्सूतः स्पर्शधूमावलोकतः ॥१४३॥
वेधयेत् सर्वसत्त्वानि हेम तारकरो भवेत् ।
तदामृतरसोद्भूतां गुटिकां धारयेन्मुखे ॥१४४॥
जरारुजा विनिर्मुक्तो ह्यमरत्वमवाप्नुयात् ।
वज्रदेहस्तु बलवान् योगज्ञानसमन्वितः ॥१४५॥
तिष्ठेत्स मृत्युलोके तु गुहाकल्पायुषो नरः ।
तारकान्तमणिस्पर्शात्तेन योगेन सूतकः ॥१४६॥
वज्रवद्बन्धमायाति नच क्षीयेत वह्निना ।
तारहेममयीं पृथ्वीं कुरुते स महारसः ॥१४७॥
पंचभूतात्मको देहे नियुक्तस्तु रसो महान् ।
अग्नियोगाद्भवेद्धेम मणित्रयरसो महान् ॥१४८॥
गुटिका तस्य वक्त्रे तु धारिता मृत्युनाशिनी ।
वज्रकायो भवेन्ना वै ज्ञानयोगसमन्वितः ॥१४९॥
तारकान्तस्य वज्रस्य चन्द्रकान्तस्य चैव हि ।
सूर्यकान्तेन कान्तेन एकं कृत्वा तु शर्वजम् ॥१५०॥
तेनाखोटं नियुंजीत कलांशाद् बध्यते रसः ।
जायते सारणायोग्यः शतसाहस्रवेधकः ॥१५१॥
सिद्धार्द्धमात्रयोगेन पलेनैकं न दिव्यताम् ।
अमरत्वमवाप्नोति दिव्यदेहो महाबलः ॥१५२॥
विषाणां तु महावीर्यं शृणु वक्ष्यामि तत्त्वतः ।
महागरं सक्तुकं च महावीर्यं गुणोदयम् ॥१५३॥

नीलोत्पलनिभं[भः] कंदो वाह्यतः कपिलो भवेत् ।
विस्फोटैश्चितः सर्वत्र भङ्गे भिन्नाञ्जनप्रभं[भः] ॥१५४॥
कुसुम्भसदृशं पत्रं समभूमिषु गच्छति ।
विषमानि च तान्येव पुष्पमासुरिसंनिभम् ॥१५५॥
तच्च नीलं भवेत्सर्वं परीक्षां शृण्वतः परम् ।
अदृष्टस्येव लब्धस्य शास्त्रदृष्टेन योगतः ॥१५६॥
तस्य कन्दं तु संगृह्य त्वधोभागे तु खंडयेत् ।
अंगुल्यग्रे हतं तं तु क्षरते सक्तुवद्यदा ॥१५७॥
सक्तुकं तद्विजानीयाद् विषं परमदारुणम् ।
गोक्षीरे बिन्दुमात्रं तु तालकं तु सुघर्षितम् ॥१५८॥
निक्षिपेत् सक्तुकं तत्र शिखिकंठनिभं भवेत् ।
तदा तच्च विजानीयात्सक्तुकं नात्र संशयः ॥१५९॥
सूतके हेम पादेन योजितं तु सुमर्दितम् ।
अम्लवेतससंयुक्तं ईषत्सक्तुकयोजितम् ॥१६०॥
वैष्णवं अमलं दद्याद्धेम नागेन संमितम् ।
दानवेन्द्रं च दरदं सक्तुकेन समं भवेत् ॥१६१॥
सुमर्दितं द्रुतं कृत्वा आयसे कांतजे शुभे ।
अघोरास्त्रमघोरं तु जपमानस्तु साधकः ॥१६२॥
त्रैलोक्यडामरं वाथ कामिकं वा जपेद् बुधः ।
शिवोक्तं समयं पूर्वं स्मर्त्तव्यं तु महारसे ॥१६३॥
एवमुक्तं कल्पयित्वा शोषयित्वा च वह्निना ।
तेन नागं शतांशेन विद्धं सिंदूरसप्रभम् ॥१६४॥
तत्क्षणाज्जायते पूक्तं (?) तद्रसं खखमध्यतः ।
शतभागं भवेद्रक्तं जपापुष्पसमप्रभम् ॥१६५॥

तेन भागेन तारस्य शतवेधं तु दापयेत् ।
तद्धेम शाश्वतं दिव्यं देवानामपि भूषणम् ॥१६६॥
यदा सप्ताहसुस्विन्नं तत्कल्कमम्लवेतसे ।
मृदग्निनावृतो भूत्वा स्वरोटं सूतकं क्षिपेत् ॥१६७॥
स एव बद्ध्यते सूतः कोटिवेधी भवेद्रसः ।
रसधेनुरियं मुख्या अक्षया नित्यमेव तु ॥१६८॥
गुंजामात्रोपयोगेन पलेनैकेन खेचरः ।
उत्पतेदन्तरिक्षे वै महाबलपराक्रमः ॥१६९॥
विधानं मुस्तकस्यापि सक्तुकस्य यथोदयम्[दितम्] ।
तेनैव जायते क्षीरं रक्तवर्णं सुतेजसम् ॥१७०॥
कृत्वा तु वेधयेन्नागं शतेनैव तु तारकम् ।
तस्यैव शतभागेन विद्धं ताम्रं तु हाटकम् ॥१७१॥
यच्च कृष्णविषं नाम क्षीरं तदसितं भवेत् ।
तेन योगेन संयुक्तं नागं सिंदूरसप्रभम् ॥१७२॥
तेन ताम्रं भवेद्विद्धं शतांशाद्धेम चोत्तमम् ।
वत्सनाभेन कपिलं क्षीरं भवति योजितम् ॥१७३॥
तेनैव पूर्वयोगेन कन्यसं [कनीयः] कनकं भवेत् ।
शृंगीविषपरीक्षायां रक्तक्षीरं यदा भवेत् ॥१७४॥
तेन तद्योगमात्रेण नागं हेम विधीयते ।
मुस्तकं वत्सनाभं तु कृष्णं शृंगीविषं तथा ॥१७५॥
रसायने नैव योज्या रुजानाशे भवन्ति ते ।
यदा तु फलपक्वानि विषाणि तु भवन्ति हि ॥१७६॥
तस्मिन्काले हि ग्राह्याणि निरर्थान्येव चान्यथा ।
वस्त्रे सतैले गृह्णीयात् सक्तुकेन तु लेपिते ॥१७७॥

तदा देशान्तरे गच्छेद्विषाणां च विधिस्त्वयम् ।
अन्यथा सूर्यसंतप्ता वातोद्वान्ता महाविषाः ॥१७८॥
निर्वीर्यास्तु भवन्त्येते सर्वकालेषु निष्फलाः ।
अतो लब्धा यथाप्राप्ता अज्ञाता आत्मना तु ते ॥१७९॥
विषं परीक्ष्य क्षीरेण यदि तत्तु भवेद्दधि ।
तद्विषं कुष्टरोगघ्नं नागमूत्रेण पेषयेत् ॥१८०॥
आदियोगेन संयुक्तं यावन्नष्टं तु सूतकम् ।
नागं तु पुटपाकेन वह्नौ धाम्य प्रयत्नतः ॥१८१॥
तत्तारं जायते दिव्यं शङ्खकुन्देन्दुसप्रभम् ।
श्वेतं विषं परीक्षेत क्षीरं चोष्णं भवेद्यदि ॥१८२॥
दधि वा जायते सद्यः संगृह्यः स महाविषः ।
सारिवा भृङ्गवेरं च क्षीरिणी[ण्या] सह योजितम् ॥१८३॥
तद्वर्णेन तु योगेन प्रयुक्तेन विधानवित् ।
नागे शतपलं ध्मातं पलमेकं तु दापयेत् ॥१८४॥
तारं भवति तत्क्षिप्रं मृणालसमवर्णकम् ।
कपिविषं परीक्षेत यदि रक्तं सस्यबुद्बुदम् ॥१८५॥
क्षीरिणीं सारिवां चैव उक्तयोगेन योजयेत् ।
तेन नागं पुटे पक्वं धमेदग्नौ यथार्थतः ॥१८६॥
तारतां याति तन्नागं दधिस्तरसमप्रभम् ।
पीतयोगेन वा शुल्वं विद्धमायाति कांचनम् ॥१८७॥
रक्तं क्षीरे परीक्षेत यदि रक्तं तु तद्भवेत् ।
जोतिष्का हयगन्धा च लांगली करवीरकः ॥१८८॥
रक्तापामार्गसंयुक्तमुक्तयोगेन संयुतम् ।
नागपत्राणि संलिप्य पुटितं तु यथार्थतः ॥१८९॥

ध्मातं तत्तु भवेद्धेम कूष्माण्डकुसुमप्रभम् ।
यदा क्षीरं च तालं च कृष्णीभवति वर्णतः ॥१९०॥

फेनं वै मुञ्चति चान्यं तद्विषं तु महाबलम् ।
सारिवां शृङ्गवेरं च रोध्रेण सह योजयेत् ॥१९१॥

कुष्टं कुटजबीजानि सिन्दुवारं नियोजयेत् ।
आदियोगेन संयुक्तं पेषयित्वा समांशतः ॥१९२॥

नागे पलशतं दद्यात् पलमात्रं विषस्य तु ।
पिण्डीं बध्वा तु विधिवत् हठपाकेन तद्धमेत् ॥१९३॥

तच्च हेम भवेद्दिव्यं तारयोगात्सितं भवेत् ।
कृष्णं विषं यदा क्षीरं कृष्णं भवति वर्णतः ॥१९४॥

विषं लांगलिका चैव करवीरश्च चित्रकः ।
रजनी गृहधूमं च आदियोगेन संयुतम् ॥१९५॥

नागस्य शतभागं तु दत्त्वा धाम्यं यथार्थतः ।
हाटकं भवते दिव्यं कूष्माण्डकुसुमप्रभम् ॥१९६॥

शृङ्गीविषेण रक्तं तु क्षीरं भवति वर्णतः ।
उन्मत्तीजसदृशमाद्ययोगेन संयुतम् ॥१९७॥

संयोज्य नागं चैतेन नागलेपेन धा[ध्मा]पयेत् ।
तच्च पीतं भवेत्क्षिप्रं हाटकं तु न संशयः ॥१९८॥

कृष्णं विषं यदा क्षीरं श्यामं भवति वर्णतः ।
उन्मत्तबीजसहितं लांगली करवीरकम् ॥१९९॥

रजनी गृहधूमं च चित्रकं च प्रदापयेत् ।
नागस्य पत्रलेपेन ध्मातमर्द्धेन कांचनम् ॥२००॥

तारं वा जायते हेम कृष्णं षट्पदसप्रभम् ।
अर्द्धेन योजितं तत्तु मातुरप्यधिकं भवेत् ॥२०१॥

अल्परागा विषा ये तु तेषामर्द्धक्रिया भवेत् ।
अतिरागं तु निर्बीजं तारहेमकरं भवेत् ॥२०२॥
दध्युष्णं बुद्बुदक्षीरे पीतरक्तसितेतरम् ।
सर्वेषां चैव कल्कानां द्विपदीकुसुमं क्षिपेत् ॥२०३॥
ना कर्म्मजाद्यसंयुक्तं चक्रस्वेदेन स्वेदयेत् ।
अम्लवेतससंयुक्तं ना जलं तत्र निक्षिपेत् ॥२०४॥
हस्तमात्रावटे[टं] कृत्वा चक्रवच्च त्वधोगतम् ।
वितस्त्यायामतः कार्यं वितस्तिं त्यज्य मध्यतः ॥२०५॥
..................... मधोहस्तं तथावटम् ।
गोश्रृङ्गं स्थापयेत्तत्र कल्कादूनं त्रिभागशः ॥२०६॥
तुषमृत्तिकया लेपं तस्य बाह्ये नियोजयेत् ।
अंगुलौ कंटकाहे स्यान्मल्लकं चोपरीभवेत् ॥२०७॥
करीषं पार्श्वगत्तीयां निक्षिपेदग्निदीपितम् ।
शुष्के शुष्के द्रवं दद्याच्चक्रवेधो विधीयते ॥२०८॥
एवं कृत्वा तु कल्कानि विषकर्म्मणि योजयेत् ।
अम्लवेतससंयुक्ता विषाः सिद्धिप्रदा मताः ॥२०९॥
रसे रसायने चैव शोभनश्चाम्लवेतसः ।
अथाम्लवेतसोत्पत्तिः ।
क्रौंचजस्तु रसो दिव्यः स्वयं रस उदाहृतः ॥२१०॥
विधानं लक्षणं तस्य शृणु वक्ष्यामि तत्त्वतः ।
क्रौंचस्तु दानवो नाम हिमवद्गिरिगह्वरे ॥२११॥
दक्षकुक्षौ कुमारस्तं जघान च महाबलम् ।
शक्त्या हतस्य तस्यैव ललाटाद्रक्तबिन्दवः ॥२१२॥
इतश्चेतश्च पतिता ऊष्माम्ला बीजतां गताः ।
अम्लबेतसनाम्ना च विटपस्तु समुद्गतः ॥२१३॥

पत्रैः स्निग्धैर्घनैश्चैव श्लक्ष्णैरग्रैश्च[रग्रे च] तीक्ष्णकैः ।
छेदयित्वात्मदेहं तु वि[भि]द्यते चाम्लवेतसः ॥२१४॥

फलं तस्यैव हेमन्ते प्रवृत्तानि फलानि तु ।
करीरसंस्था विज्ञेया पीलुकारससंस्थिताः ॥२१५॥

पीतास्तु मृदवो ज्ञेया अत्यम्लः स्वादतो भवेत् ।
तत्र गत्वा चतूद्देशमद्रो[घो]रास्त्रं समुच्चरेत् ॥२१६॥

लोहयष्टिं करे कृत्वा त्वस्त्रेणालभ्य संस्पृशेत् ।
गृह्णीयादस्त्रवापेन क्षुण्णयेच्च उलूखले ॥२१७॥

जप्त्वास्त्रेणोद्गिरंस्तत्र वाससा गृह्णीयाद्रसम् ।
स रसो जायते पीतस्त्वम्लो मधुरगन्धकः ॥२१८॥

तस्य शेषाणि संक्षुद्य तोये क्वाथ्य यथार्थतः ।
रक्तपीतं भवेच्चैलं तोये परिसमुद्धरेत् ॥२१९॥

स्नेहेऽनीकं[न किं] चित्संयुक्तं रसं तुम्बे विनिक्षिपेत् ।
स्निग्धे सिह्लकवस्त्रेण वेष्टयित्वास्त्रमन्त्रितम् ॥२२०॥

लोहयष्टिं क्षिपेत्तत्र अङ्गुणि[लि]द्वयमात्रतः ।
नयेद्देशान्तरं प्राज्ञो नित्यं मन्त्रेण पूजयेत् ॥२२१॥

क्रौञ्चय[ज]स्तु रसो दिव्यो विज्ञेयो ह्यमृतोपमः ।
जराव्याधिनिहन्तासौ मृत्युदारिद्र्यनाशनः ॥२२२॥

अन्वीक्ष्य यत्नात्संग्राह्यो लब्ध्वा चाथ परीक्षयेत् ।
रक्तपीतसुवर्णेन त्वत्यम्लो जायते घनः ॥२२३॥

निमील्य कांस्यपात्रे तु तारे लग्नस्तु हेमवत् ।
नयनाञ्जनेषु तीक्ष्णेन नयनस्य जलापहः ॥२२४॥

विषूचिकाद्यजीर्णं तु अन्नोद्भवरसं तथा ।
हरति तत्क्षणादेव प्राशितः किंचिन्मात्रतः ॥२२५॥

आमवातं तथा शूलं शिरोर्त्तिं हरते क्षणात् ।
वनितायोनिरंध्रे तु निहितो द्रावको भवेत् ॥२२६॥
रक्तस्रुतिं हरेत्क्षिप्रं वातातीसारमेव च ।
शिरारक्तस्रुतिं चैव धारयेत्तत्क्षणेन तु ॥२२७॥
कर्णशूलं च पूतित्वं मुखदोषं हरेत् क्षणात् ।
तीक्ष्णचूर्णं तु तेनैव उष्मातपनिधापितम् ॥२२८॥
द्रवते नात्र संदेहः शंखशुक्तिं समौक्तिकम् ।
गजदन्तानि धातूनि स्नायुमांसं द्रवेत् क्षणात् ॥२२९॥
एवं तु लक्षणं ज्ञात्वा ततः कर्म समाचरेत् ।
पीतरक्तं सितं वाथ खमाम्लवेतसंयुतम् ॥२३०॥
अरण्योपलैः पुटे दग्धं चूर्णितं चूर्णतां व्रजेत् ।
म्रियते चन्द्रिकाहीनं तस्य स्नेहेन संयुतम् ॥२३१॥
खादिराग्नौ गुहाध्मातमशेषं लेपवर्ज्जितम् ।
जायते लेपयेन्मूर्षां पटुक्षारैर्यथागमात् ॥२३२॥
तीक्ष्णाद्या आयसाः सर्वे द्रवन्ति नात्र संशयः ।
अम्लवेतसतैलेन सोष्मे दत्त्वा तु मर्द्दयेत् ॥२३३॥
समद्रुतिं सबीजस्तु अभ्रस्तीक्ष्णे नियोजितः ।
शर्वजो बन्धमायाति तारारिष्टं शतांशतः ॥२३४॥
विन्धते कुरुते हेम वङ्गारेन्दीवरं शशी ।
हेमकांस्यारगं सोमं जायते कनकं शुभम् ॥२३५॥
द्विधायुक्तं सहस्रेण लक्षवेधी स पंचधा ।
अष्टधा कोटिवेधी स्याज्जायते वाथ तद्रसः ॥२३६॥
उच्चवेधी स विज्ञेयो द्विधा युक्तस्य जायते ।
स्नेहाम्लवेतसं दत्त्वा स्वेदयेन्मर्द्दयेद् बुधः ॥२३७॥

शोषान्ते द्रवने सर्वं सारयित्वा समं बुधः ।
ततःस्नेहाम्लतैलेन तदा मूषागतं रसम् ॥२३८॥
पश्चात्तु सारणं कार्यं बीजभागाग्निमध्यतः ।
तद्बीजसमभागेन तद्रसमनुसारयेत् ॥२३९॥
मूषामध्यगतं ध्मातं द्रवेच्चैव द्रुतिं क्षिपेत् ।
तैलाम्लवेतसं युक्तं वेधयेत् क्रियते क्षणात् ॥२४०॥
बीजहीना भवेत् संख्या सर्ववेधे रसस्य तु ।
रसायनं रसं खादेन्माषनिष्पावरक्तिका ॥२४१॥
सिद्धार्थकं तदम्लेन स्नेहेन सुप्रयोजितम् ।
अग्नीषोमीयबीजेन आत्मा तु विषुवे गतः ॥२४२॥
स भवेद् दिव्यदेहस्तु जरामृत्युविवर्जितः ।
खेचरत्वमवाप्नोति त्वणिमादिगुणैर्युतः २४३॥
स्पर्शवेधी यदा जातो गुटिकां धारयेन्मुखे ।
गुणाधिको भवेत्सिद्धो द्वितीय इव शंकरः ॥२४४॥
एवं तीक्ष्णादिलोहानि क्रौंचजेन युतानि तु ।
पुटितानि च लोहानि शोष्येन्मर्द्यायसोत्क्षणात् ॥२४५॥
तैलयोगेन सोष्मे तु जारयेद्बध्यते रसः ।
अथ चूलिकगन्धस्तु अम्लवेतससंयुतः ॥२४६॥
दत्वार्द्धार्द्धं तु जरति दोलाकच्छपयोगतः ।
जरेत्तु तत्क्षणादेव क्रमाद्बन्धमवाप्नुयात् ॥२४७॥
अम्लवेतससंयोगाद्रसलोहानि यानि तु ।
रसाश्चोपरसाश्चैव माक्षीकविमलादयः ॥२४८॥
गंधकाद्याश्चरेत्क्षिप्रं वध्यते रज्यते क्रमात् ।
द्रुतबन्धे यथा संख्या गुणाधिकं क्रमाद्भवेत् ॥२४९॥

वीजं पादेन सूतस्य गन्धकान्ते विनिक्षिपेत् ।
गन्धकं तत्र दातव्यमम्लवेतसभावितम् ॥२५०॥
पादेन चूलिकोपेतं तत्तैलं दापयेत्ततः ।
अभावे ज्यौतिस्तैलं तु त्रिदिनं स्वेदयेद् बुधः ॥२५१॥
अभावात्किंचित्संयोज्य तत्स्नेहं केवलमपि ।
कर्षाग्नौ [का-]रयेत् स्वेदं सितपत्राणि लेपयेत् ॥२५२॥
रुवूकस्नेहदीपे च त्रिवारं तु प्रतापयेत् ।
तं तु[तनु]लेपात्पुटत्रीणि तनुलेपेन चान्धयेत् ॥२५३॥
अलिपक्षनिभं तं तु हेमार्द्धान्मातृकोत्तरम् ।
रसकामलमाक्षीको दरदे तु पुटालके ॥२५४॥
शिलागैरिककासीसा सितपीता तु या भवेत् ।
हेमाभं हेमबीजैः सितबीजैः सितैः सितम् ॥२५५॥
आरविंदं तु भवते तद्योगान्मातृकोत्तरम् ।
दानवेन्द्रस्य तु यत्कर्म तैलहीनं यथा भवेत् ॥२५६॥
अत्यम्लवेतसे युक्तमाविकस्नेहसंयुतम् ।
बीजपादेन सूतं तु स्वेदयेद्दिवसत्रयम् ॥२५७॥
लेपयेत् शशिपत्राणि तथा दीपशिखे त्रिधा ।
पुटत्रयं ततो लेपं गुहायां धामयेत्ततः ॥२५८॥
अलिपक्षनिभं तं तु अर्द्धार्द्धान्मातृकोत्तमम् ।
अम्लवेतससंयुक्तं बलिदरदचूलिकम् ॥२५९॥
आविकस्नेहसंयुक्तं मृद्वग्नौ त्रिदिनं पचेत् ।
अलिपक्षनिभं तारं मातुरप्यधिकं भवेत् ॥२६०॥
अम्लवेतससंयुक्तं शिलागन्धकचूलिकम् ।
उष्मयोगात्सितं तारं हेमार्द्धान्मातृकोत्तरम् ॥२६१॥

अम्लवेतससंयुक्तं बलिश्यामासु चूलिकम् ।
आविस्नेहेन संयुक्तं पक्त्वा तारं सुयोजयेत् ॥२६२॥
चूलिकं तु वलिगैंरी त्वम्लवेतससंयुतम् ।
आविकस्नेहसंयुक्तं रक्तयोगेन पाचयेत् ॥२६३॥
तारन्तु तद्भवेत्कृष्णं हेमार्द्धान्मातृकोत्तरम् ।
पुटालचूलिकं गन्धमम्लस्नेहेन पाचयेत् ॥२६४॥
तारं भवति कृष्णं तु मातुरप्यधिकं भवेत् ।
चूलिकं बलिमाक्षीकमम्लस्नेहेन योजयेत् ॥२६५॥
तारकृष्णीकरो ह्येष हेमार्द्धान्मातृकोत्तरम् ।
अम्लवेतससंयुक्ता गन्धामलकचूलिका ॥२६६॥
स्नेहपक्वं सितं तारं हेमार्द्धान्मातृकोत्तरम् ।
चूलिका रसकं सार्द्धमम्लस्नेहेन पाचयेत् ॥२६७॥
तारकृष्णीकरो ह्येष मातुरप्यधिकं भवेत् ।
रसबीजसमायुक्ताः सर्वयोगा विधीयते ॥२६८॥
षट्कार्द्धसार हेम्नि( ? ) वा सर्वे उत्तमकारकाः ।
उत्तरे वारयेद्योगान् हेमोत्कर्षा भवन्त्यमी ॥२६९॥
वंगं तीक्ष्णोरगं चैव एभिर्योगस्तु घातयेत् ।
आरविन्दे त्रिधा व्यूढा हेमार्द्धान्मातृकोत्तरम् ॥२७०॥
सिते हेम्नि दशांशेन तौल्योत्कर्षफलप्रदम् ।
नृपावर्त्तकतुत्थानि चूलिकेनाम्लयोजिताः ॥२७१॥
आविकस्नेहसंयुक्ताः शुल्वे हेमत्वकारकाः ।
हेमोत्कर्षकराश्चैव चतुर्वर्णगुणोदयाः ॥२७२॥
रसमामलमाक्षीका दरदं गन्धतालकम् ।
गैरिका तु शिलाकासी चूलिकं समयोजिताः ॥२७३॥

नृपावर्त्तकतुत्थं च माणिमंथं सुवर्च्चलम् ।
अम्लवेतसयोगेन पेषयित्वा यथायथम् ॥२७४॥
लेपयेच्छुल्वपत्राणि सप्तवारान् पुटे पचेत् ।
चूर्णमम्लेन तद्भाव्यं तारे तु त्रिगुणं क्षिपेत् ॥२७५॥
तद्भवेत्कांचनं पीतं हेमाद्धाद्धिमग्रुत्तमम् ।
अनेन उरगे पक्कं वंगं तीक्ष्णमथापि वा ॥२७६॥
शुल्वेन त्रिगुणं व्यूढं हेमाद्धात्कनकोत्तमम् ।
पृथक् पृथक् भवेत्क्षिप्रं शुल्वे कांचनकारकाः [कम्]॥२७७॥
बीजानि भवंति तानि अम्लवेत*······· ॥

× × ×

········· निर्मुक्तो बलतेजःसमन्वितः ।
सुभगः कृष्णकेशस्तु साग्रं जीवेत्समाशतम् ॥३१४॥
क्रौंचजं रसमेकं तु यस्तु खादति पूरुषः ।
कलामात्रात्समारभ्य यंत्रं यावत्प्रमाणतः ॥३१५॥
रुजाजराविनिर्मुक्तो जीवेच्च स समाशतम् ।
तैलेन मानयोगेन द्विगुणोक्तफलप्रदम् ॥३१६॥
वातगुल्मं च प्लीहानी[दि]दुर्मुक्तं च शिरोद्भवम् ।
लीढ्वाम्लवेतसं हन्ति सप्ताहात् कालयोगतः ॥३१७॥
नेत्ररोगांश्च सर्वांश्च मांसस्य विकृतीस्तथा ।
तील्यांतात्वंजनं हंति दिवादौ च निशादितः ॥३१८॥
वाधिर्यं पूतिशूलं च कर्णरोगं च पूरणात् ।
हरति तद्रवः[दद्रून्] कंडूश्च क्षारमूत्रनियोजितः ॥३१९॥

* अतः परं मूलमातृकायाः पत्रचतुष्टयं ( १२३ तः १२६ यावत् ) नष्टम् ।

त्र्यूषणेन कलां खादेद्दीप्ताग्निर्जायते नरः ।
खरवत्सतुषं धान्यं भक्षितं जरति क्षणात् ॥३२०॥

अन्नदोषांश्च सर्वांश्च हरते तत्क्षणेन तु ।
क्रौंचजस्य रसस्यैव अभ्यासाज्जरते यदा ॥३२१॥

पलमेकं समेनैव दिव्यदेहस्तु जायते ।
सहस्रजीवी भवति उत्तप्तकनकप्रभः ॥३२२॥

तस्य तैलोपयोगेन फलं तद्द्विगुणं भवेत् ।
तस्य तैलेन वलिना बीजयुक्तं तु सूतकम् ॥३२३॥

यद्वासितं चूलिकं च ब्रह्मवृक्षफलानि च ।
तच्चैकमष्टमासेन[मांशेन]योजयित्वा च कान्तजे ॥३२४॥

स्वेदयेदेकविंशाहं ततो दग्ध्वा तु तत्रगम् ।
दग्धे तैले धमेदग्निमंगारैः खादिरैस्ततः ॥३२५॥

क्षणे क्षणे यत्नतः पश्यन् कांतस्थं तु महारसम् ।
ग्रंधमायाति तत्रस्थः य† ...... ।

× × ×

......... नहिते तु रसायने ।
सर्पिः श्रेष्ठं भवेत्स्नेहे मधुरे तु हितं मधु ॥३५०॥

इक्षुजं रसमिष्टं तु नेष्टं पक्वं विधीयते ।
इष्टं तत्क्षारहीनं तु खंडशर्करजं हितम् ॥३५१॥

पानकास्तु हितान्मे[श्रे]वं तिंणितीबदरोद्भवाः ।
मद्यं रसायने नेष्टं सर्वदोषकरं भवेत् ॥३५२॥

आरनालांधपक्वं वा चुक्रपानं विवर्जयेत् ।
नेष्टमत्यम्बुपानं तु ताडागं तु विवर्ज्जयेत् ॥३५३॥

---

† अतः परं मूलमातृकायाः पत्रद्वयं ( १२७, १२८ ) नष्टम् ।

वापीकूपगतं स्वादु लवणाम्लं च शोभनम् ।
नदी श्रोत्र[स्रोतो]गतं श्रेष्ठं सुस्वादु क्षारवर्जितम् ॥३५४॥
सुवर्णललनास्त्याज्याः सदाऽन्याधिकराश्च ताः ।
तक्रं स्नेहोद्धृतं शस्तं प्रशस्तं तु न वै दधि ॥३५५॥
तिलतैलं तथा क्षौमं नैव खादेत्कदाचन ।
दग्धं सुखादिनिर्मुक्तं नष्टक्षीरान्नमेव च ॥३५६॥
नष्टं दग्धं तथामांसं[ऽऽमांशं] मांसं चैव विवर्जयेत् ।
कृष्णजं पित्तजं चैव शिरोजं नैव भक्षयेत् ॥३५७॥
मेषाजे प्रावृषि मत्स्यादि वा नारं न भक्षयेत् ।
तरक्षुजं न संध्यायां मांसं जीर्णं विशोभनम् ॥३५८॥
द्विशफो उष्णकाले तु हेमंते एकशफा नखी ।
चणका राजमाषाश्च निष्पावाश्च मसूरकाः ॥३५९॥
नेष्टाःस्युर्द्विदलाः सर्वे भुक्ता[मुक्त्वा]मुद्गाढकीं बुधः।
वास्तुकद्रोणपालंकमेघनादाश्च शोभनाः ॥३६०॥
पुष्पजं तु फलं श्रेष्ठं मधुराम्लं सशर्करम् ।
गोक्षीरादिभवं सर्वं श्रेष्ठमुक्तं रसायने ॥३६१॥
धान्यानां प्रवरा ज्ञेया यवगोधूमषष्टिकाः ।
सुखाम्बुना भवेत्स्नानं पिबेत्तोयं सुशीतलम् ॥३६२॥
नित्यं नेष्टं भवेत्स्नानमतिभुक्तं न शोभनम् ।
दिवानिद्रा भवेन्नेष्टा रात्रौ जागरणं नहि ॥३६३॥
उष्णघर्मं श्रमग्लानि तापशीतं न शोभनम् ।
व्यर्थश्रमं महायुद्धं क्रोधं चिंतां न कारयेत् ॥३६४॥
दुःखासनं दुःखशयनं दुःखपानं न सेवयेत् ।
तथा कामोद्भवं दुःखमन्यद्वाथ न कारयेत् ॥३६५॥

उपवासं त्रिरात्रं वा कृच्छ्रं चान्द्रायणं नहि ।
एकभक्तं तथाऽभक्तं सदा कार्यं यथा तथा ॥३६३॥
यामाद्ये नैव भोक्तव्यं त्रियामं न व्यतिक्रमेत् ।
यथाग्निबलकामं वा तथा तिष्ठेत् सदा सुखी ॥३६७॥
रसायने विधिश्चोक्तः सामान्यः सर्वतः शुभः ।
पूजाजपहोमरतः सदा तिष्ठेच्छिवे रतः ॥३६८॥
दीप्तैः स्वायंभुवैर्मन्त्रैः शाक्तैर्वा यजनं सदा ।
पिशाचीं राक्षसीं दिव्यां वामदेवीं न साधयेत् ॥३६९॥
अथ सिद्धान्सदा तिष्ठेन्नित्यं मन्त्रतनुर्बुधः ।
छिद्रान्वेषरता नित्यं नृणां मृत्युप्रदायकाः ॥३७०॥
आसुरी तु भवेच्छ्रेष्ठा छिद्रान्वेषरता नहि ।
विद्याधरी किन्नरी वा नहि विघ्नकरा भवेत् ॥३७१॥
दिव्यैः सह विरोधं तु न कार्यन्न च साधयेत् ।
नोच्चाटयेद्ग्रहान्नागान् ज्वराद्यात्मानवेत्तनौ ॥३७२॥
अन्यस्थाने स्थिता वाथ पिशाचा राक्षसादयः ।
न कुर्यात्क्षुद्रकर्माणि अभिचारं न कारयेत् ॥३७३॥
भूत्यायुःसिद्धिमन्विच्छेत्खेचराद्यणिमाष्टकम् ।
शान्तचित्तः सदा तिष्ठेन्मुक्तिं लभति शाश्वतीम् ॥३७४॥

इत्याद्ये स्वच्छन्दे शक्त्यावतारे शतसाहस्र्यां गोरक्षसंहितायां
भूतिप्रकरणे दिव्यौषधिलक्षणकर्म्मविधानः [ नं नाम ]
सप्तमः पटलः ॥ ७ ॥

# अष्टमः पटलः

शक्तिरुवाच

अयस्कान्तस्य वीर्यन्तु सूचितन्नोदितं त्वया ।
कान्तयुक्तो यथा सूतो रसे चैव रसायने ॥ १ ॥

बंधमायाति विधिना कान्तस्यैव तु लक्षणम् ।
यथाकर्म नियोगं तु तद्वदस्व मम प्रभो ॥ २ ॥

श्रीकण्ठ उवाच

शृणु शक्ते यथाकर्म कान्तस्यैव तु लक्षणम् ।
यथा कान्तेन सूतस्य बन्धनं तु विधीयते ॥ ३ ॥

रसायनविधिश्चै[श्चै]व सरहस्यं वदाम्यहम् ।
अतिवीर्यं महापुण्यं सद्यःप्रत्ययकारकम् ॥ ४ ॥

जराव्याधिहरं चैव मृत्युदारिद्र्यनाशनम् ।
तस्य पुण्यस्य कान्तस्य उत्पत्तिं शृणु तत्त्वतः ॥ ५ ॥

क्रीडमानस्य देवस्य त्वघोरस्य महात्मनः ।
शक्तिचक्रस्य मध्ये तु आयसादुरगाश्च ये ॥ ६ ॥

अघोरदेहलग्नास्तु मणिसत्किरणोज्ज्वलाः ।
फणि[णा] भोगस्थिताः कांता आयसा अमृतोपमाः ॥ ७ ॥

सचेतना सजीवास्तु कांता········ ।
स्वेदविन्दुसमुद्भूताश्चलनात्क्षितिमागताः ॥ ८ ॥

यत्र यत्र गतास्ते तु स्वेदविन्दुसमुद्भवाः ।
गावीं गता धरा तत्र सजीवास्तत्र संस्थिताः ॥ ९ ॥

ग्रावरूपास्तथा चान्ये गुरवः कृष्णभंगुराः ।
षट् पंच चत्वारि द्वित्रिचारको[णो]पि हि सुखावहाः ॥ १० ॥

मुखांतकां*.......................... ।

× × ×

......... न्येतैरेकैकस्तु चतस्रधा ।
सितपीतरक्तकृष्णा उपयोगाः स्ववर्णदाः ॥ ३७ ॥

स्वरूपाद्द्रवकं वर्ज्यं यत्नेन द्रुतमायसम् ।
तस्योपयोगं कर्त्तव्यं चतुर्वर्णगुणोदयम् ॥ ३८ ॥

हेमतारायसं शुल्वं द्रुतं तद्वर्णदायकम् ।
एकवर्णास्तु चत्वारो द्रावकास्तु पृथक् पृथक् ॥ ३९ ॥

अन्येषामपि सत्त्वानां द्रावयेदग्निसंश्रयात् ।
शिखित्शिखिसमायुक्तां शिखियोगाथ[च] भास्करे ॥ ४० ॥

करातपनियोगेन द्रवति सलिलं यथा ।
गृह्णाति तत्क्षणादेव शर्वजं तस्य योगतः ॥ ४१ ॥

शिखित्शिखिसमायोगस्तत्छिखाजटयोगतः ।
द्रुतमाषार्द्धकल्कं च कल्कार्द्धं तु युक्तितः ॥ ४२ ॥

शर्वजस्य समायोगान्माषार्द्धं त्रिचतुर्थकम् ।
द्रुते पलद्वयं कुर्याद्दिव्यत्वमयुतायुषम् ॥ ४३ ॥

भवजस्य तु योगेन पलेनैकेन दिव्यता ।
सर्वद्वन्द्वविनिर्मुक्तो ह्ययुतायुर्भवेन्नरः ॥ ४४ ॥

एकं[वं] क्रमेण खादेत जायते ह्यजरामरः ।
समं द्र[द्रु]तौ तु भवजं पीतरक्तनियोजितम् ॥ ४५ ॥

---

* अतः परं मूलमातृकायाः पत्रद्वयं ( १३२, १३३ ) नष्टम् ।

सितरक्तं सितेनैव भवेद्रुक्मं सुशोभनम् ।
सितेन रक्तं सुसितं भवजस्य समागमे ॥ ४६ ॥

आयसेनायसं योगात्सितं रुक्मत्वमाप्नुयात् ।
पीतं वाथ सुरक्तं वा शिलावर्णं सुचूर्णितम् ।
गोविषाणे क्षिपेत्तं तु दरदं रसकामलम् ॥ ४७ ॥

माक्षिकं भूस्तथाकासी कान्तस्यार्द्धं नियोजयेत् ।
भवजेन समाप्लुत्य शर्वजे कनकेन तु ॥ ४८ ॥

त्रिफलाकषाययुक्ते तु त्र्यहं चुक्रे पचेद् बुधः !
शोषयित्वा तु संचूर्ण्य अम्लवर्गेण भावयेत् ॥ ४९ ॥

सुवर्च्चलं माणिमंथं विदध्यादम्लयोजने ।
मध्वाज्यस्वेदितं चक्रे मासमेकं यथायथम् ॥ ५० ॥*

......... सहस्रायुर्गुंजमात्रोपयोगतः ।
महाबलो भवेद्दिव्यस्त्रिभिश्चंद्रार्कतारकम् ॥ ६४ ॥

जीवेद्गगनचारीव वज्रदेहस्तु रुद्रवत् ।
क्रीडति सर्वभुवने कल्पान्ते मुक्तिमाप्नुयात् ॥ ६५ ॥

द्रावकस्तु अयस्कान्ते ग्रावपात्रेनिधापिते ।
जायते दिव्यसेकेन सूतको लक्षवेधकः ॥ ६६ ॥

सर्वलोहरसं दद्याद्रसोपरससंयुतम् ।
एकीकृत्वा च विधिवद्धाम्याःशेषाःसुचूर्णिताः ॥ ६७ ॥

रागस्नेहे रसंमोद्य[मर्द्य] त्वयस्कांतेन कण्डयेत् ।
दापयेत्कर्षाग्नौ तु द्रववंधः क्षणाद्भवेत् ॥ ६८ ॥

अयस्कान्तस्य गन्धेन गंधपाषाणकस्य[केन] च ।
मिलन्ति सर्वलोहानि द्रवन्ति सलिलं यथा ॥ ६९ ॥

---

*. अतः परं पत्रमेकं ( १३५ ) नष्टम् ।

दानवेंद्रवसालेपं कांतग्राम्ल[ब्ण]श्च दापयेत् ।
कृष्णस्योक्तमिदं कर्म शतसाहस्रवेधकम् ॥ ७० ॥
रसे रसायने चैव उत्तरोक्तफलप्रदम् ।
रक्ता पीता तथा श्वेता तेषां कर्म्म तथोत्तरम् ॥ ७१ ॥
सूतकं गन्धमात्रेण विनिगृह्णीत पावके ।
द्रावयन्ति च लोहानि वज्राभ्राद्या न संशयः ॥ ७२ ॥
विंधते क्षेत्र[प]मात्रेण शतलक्षेण सूतकः ।
उपयोगेन तस्यैव खेचराद्यणिमाष्टकम् ॥ ७३ ॥
लभते वज्रदेहस्तु क्रीडते स महाध्वजे ।
सूतकस्य विधिश्चान्यः कान्तयोगेन जायते ॥ ७४ ॥
खरजं वज्रकन्देन कारयेत्पुटयोगतः ।
तीक्ष्णं धात्रीरसे युक्तं कुर्यादंजनसप्रभम् ॥ ७५ ॥
अयस्कान्तस्य चूर्णं तु समभागं नियोजयेत् ।
मार्कवो मेघनादश्च पोतकीरससंयुतः ॥ ७६ ॥
ब्रह्मवृक्षस्य यत् श्लेषं वाकुच्या याजिकाद्वयम् ।
वाष्णिकां चोद्यशेषं च सूतकेन समानि तु ॥ ७७ ॥
ब्रह्मवृक्षजटातोयं धात्रीपक्वफलोदय[क]म् ।
भूधात्री खेचरी चैव धात्रीविटपसंभवा ॥ ७८ ॥
एतत्संपेष्य विधिवत् लिंगाकारे तु योजयेत् ।
सूतहीनं भवेदूर्ध्वं सृष्टिमार्जनसंभवम् ॥ ७९ ॥
देवी धात्रीद्वयोपेतं ऊर्ध्वं चैव नियोजयेत् ।
शिखितापसमायोगाद् व्रजेदूर्ध्वं तु शर्वजः ॥ ८० ॥
अधोर्ध्वं यंत्रयोगेन सप्तवारान् पुनः पुनः ।
छिन्नपक्षस्तु भवति नोद्विजेद्योगमध्यगः ॥ ८१ ॥

ध्माते महानले तिष्ठेत्तस्य बंध उदाप्लुतः ।
सूतभस्म त्वयस्कान्तं खरजं सुमृतायसम् ॥ ८२ ॥
शिलाजतुः खेचरांगस्त्र्यूषणं त्रिफला शिखी ।
अम्लवेतससंयुक्तं शिखिपित्तेन मोदयेत् ॥ ८३ ॥
मार्कवेण समायुक्तं मध्वाज्येन समायुतम् ।
धात्रीमतो भवं दद्यात्पिष्यमाणे तु चूर्णितम् ॥ ८४ ॥
यच्छेषं सोमराज्याश्च चोद्यवृक्षस्य मध्यगम् ।
योजयेत् कान्तपात्रे तु गंधमाल्यैश्च पूजयेत् ॥ ८५ ॥
दीप्तयोगादिविधिना शिवामृतमिदं महत् !
कान्तामृतं समाख्यातं शर्वजामृतिमुच्यते ॥ ८६ ॥
एष महामृतो योगो जरामृत्युरुजापहः ।
महापुण्यसमायोगे एष संपद्यते महान् ॥ ८७ ॥
कृतमंगलपुण्याहे जप्त्वाघोरं विधानतः ।
प्राशयीत समायोगे इष्टमंत्राभिमंत्रितम् ॥ ८८ ॥
माषकं तु यथा सूते तथा खादेत्सुधोपमम् ।
उक्तो विधिस्तु कर्त्तव्यो भोजनादिषु संस्थितः ॥ ८९ ॥
तद्दिनान्न भवेन्मृत्युर्जरामयविवर्जितः ।
ऋतुना जायते कामी बलवान् सुभगः सुधीः ॥ ९० ॥
प्राज्ञः शूरो महावाग्मी महावाहो [हुः] महाबलः ।
कुष्टाद्यामयनिर्मुक्तो जरया च विवर्जितः ॥ ९१ ॥
आयुर्वृद्धिस्तु षण्मासादब्दात् कल्पायुजीविकः ।
एतन्महामृतं खादेद् दधत्या वीणु मंत्रितं(?) ॥ ९२ ॥
नैव मृत्युर्भवेत्तावत् त्रिरब्दाद्योगवर्जितः ।
महाकल्पे न तस्यैतज्ज्ञानान्मुक्तिमवाप्नुयात् ॥ ९३ ॥

अस्यैव तीव्रवीर्यस्य महामृतरसस्य तु ।
अतिवीर्यतरं वक्ष्ये विधानं मृत्युनाशनम् ॥ ९४ ॥
अनेनैव तु योगेन आरोटं पिंष्य शर्वजम् ।
साधिते विधिना तेन तदुक्तं तु गुणावहम् ॥ ९५ ॥
तद्योगं कांतजे पात्रे स्थापयित्वा पिधायितम् ।
जानुमात्रावटं कृत्वा भूमौ तत्र निधापयेत् ॥ ९६ ॥
निर्जने चैव भूभागे ईशान्यां योगभूमिषु ।
शासनोक्तं तु यत्सर्वं कालघ्नो खेचरीमुखे ॥ ९७ ॥
दीप्तयोगादियोगैर्वा यजेत्स्वायंभुवैर्मखैः ।
स्वायंभुकौलवं पूज्य त्वथ स्वच्छन्दकौलवम् ॥ ९८ ॥
पञ्चोपहा[चा]रविधिना त्रिकालं भावितात्मनः ।
रसामूलं महादिव्यमाश्रयित्वा महोरणम् ॥ ९९ ॥
तिष्ठेत्स च महादैत्य आश्रयित्वा महामृतम् ।
षण्मासेनाथवाब्देन तद्योगं स समुद्धरेत् ॥१००॥
पूजयित्वा ह्यघोरास्त्रं षोडशांगविधानतः ।
त्रिभिरावरणैर्योगं जप्त्वा भक्त्या समुद्धरेत् ॥१०१॥
कृतमांगलघोषेण शंखतूर्यरवे कृते ।
पुण्याहे विषुवे योगे खादेदुक्तप्रमाणतः ॥१०२॥
कुष्ठाद्या आमयाः सर्वे त्रिसप्ताहाद् व्रजंति ते ।
महाज्वरा द्विमासेन दिव्यदेहस्तु जायते ॥१०३॥
अयुतायुषजीवी स्यादब्दात्कल्पायुषो भवेत् ।
व्रजेच्च खेचरैः सार्द्धं वज्र* ॥१०४॥

× × ×

* अतः परं पत्रमेकं ( १४० ) नष्टम् ।

कलां कर्षं पलं वाथ चतुर्वर्गस्य निक्षिपेत् ।
माषकं मनुजे दद्यात् कंचुकीफलयोगतः ॥११६॥
सुमर्द्दितं तु तत्कृत्वा तत्पचेत् घृतपाकतः ।
तच्च भुक्त्वा नरः क्षिप्रं जरामयविवर्जितः ॥११७॥
दिव्यरूपो युवा वाग्मी त्वथानेन प्रजायते ।
तद्वर्णगुणरूपेण लभते दिव्यतां नरः ॥११८॥
अब्देन बलवान् श्रीमान् सुभगोऽनन्तवर्चसः ।
अयुतायुर्भवेज्जन्तुर्महाबलपराक्रमः ॥११९॥
बीजकल्कं तथा कान्तं मध्वाज्येन समन्वितम् ।
पीतं तत्प्रातरुत्थाय जरामयनिकृन्तनम् ॥१२०॥
धात्रीकषायसहितं कान्तं मध्वाज्यसंयुतम् ।
पीत्वा तु लभते मर्त्यस्त्वब्दानामयुतस्थितिम् ॥१२१॥
धात्री रसायनानां तु कान्तयुक्ता विशेषतः ।
फाल्गुने च समुद्धृत्य रसं तेनायसं पचेत् ॥१२२॥
तद्रसेन युतं कांतं मध्वाज्येनाक्षमात्रतः ।
प्राशितं तु जराव्याधि मृत्युं हरति चाब्दतः ॥१२३॥
अमृता खेचरांगा तु कान्तं चैवैकतः कृतम् ।
मध्वाज्यसहितं लीढं जरामृत्युविनाशनम् ॥१२४॥
खदिरस्य कषायेण मधुसर्पिःसमन्वितम् ।
भृंगराजमयस्कांतं भुक्तं हन्ति महाजराम् ॥१२५॥
त्रिकषायायसे पात्रे कान्तं पीत्वा क्षपान्तिमे ।
अब्दैकेन भवेत् पुंसो युवा वाग्मी महाबलः ॥१२६॥
अब्दानामयुतं जीवेत् कांतपानपलेन तु ।
कांतं सुचूर्णितं कृत्वा त्रिफला मार्कवं रजः ॥१२७॥

घृतकेन समायुक्तमम्लवेतसपेषितम् ।
अम्लवेतससंयुक्ताः सर्वे योगाः शुभाश्च ते ॥१२८॥
सप्ताहं मर्द्दयेद्विद्वान् तत्पात्रे शोषयेद् बुधः ।
मध्वाज्यासनकल्कं तु तत्पात्रे त्वञ्जलिं क्षिपेत् ॥१२९॥
कलां तु कान्तयोगस्य समे चारेषु कोष्ठगः ।
इष्टाणुनाभिमंत्रित्वा पिबेदमृतमुत्तमम् ॥१३०॥
अनंगघेनवीयोगं तावत्कालं समभ्यसेत् ।
कुष्ठाद्या व्याधयः सर्वे हन्यान्मासेन तु ध्रुवम् ॥१३१॥
महाजराध्वस्तदेहो द्विमासेन युवा भवेत् ।
सितकेशः कृष्णस्निग्धकेशो वलिविवर्ज्जितः ॥१३२॥
अब्दाद्दिव्यमवाप्नोति महाबलपराक्रमः ।
कल्पायुर्जायते मर्त्यो दिव्यदेहः स्वरूपवान् ॥१३३॥
कान्तं सुचूर्णितं कृत्वा तीक्ष्णं धात्रीरसाहतम् ।
कर्षमात्रं च गृह्णीयाद् द्वयोः पथ्या सुचूर्णिता ॥१३४॥
धात्रीफलानि चतुरो पीतकासीसकर्षिका ।
यथाबलमयं योगो बीजकल्केन पाययेत् ॥१३५॥
सर्वकुष्ठहरो योगो जराव्याधिविनाशनः ।
असितांगोऽस्य संज्ञा तु सिताः केशाः कपालगाः ॥१३६॥
मासद्वयोपयोगेन कृष्णा अलिसमप्रभाः ।
नीलोत्पलाभः सुभगो दृढदेहः स्वरूपवान् ॥१३७॥
जायते तु सितांगेन शतवर्षो भवेन्नरः ।
जायते तु क्रमेणैव कृष्णत्वक् कृष्णमूर्द्धजः ॥१३८॥
कांतं तीक्ष्णं शिलाधातु वैष्णवं खरजोषितम् ।
भवजं क्रौंचजं चैव महानीलरसप्लुतम् ॥१३९॥

मर्दितं सप्त चाहानि तत्पात्रे मधुसर्पिषा ।
मंत्रैकादशकं ह्येतदमृतं मृत्युनाशनम् ॥१४०॥
शांताणुना सहस्रैकं जप्त्वा धान्ये निधापयेत् ।
षण्मासादमृतं तद्धि नावाथ खादयेद् बुधः ॥१४१॥
षण्मासाधिकवीर्यस्तु स्वदे*................ ।

× × ×

...ग्निशौचं भवेद्वस्त्रं सिद्धमाला च शोभना ।
एते गर्भास्तु विज्ञेया एष रेष[खा]दितः क्रमात् ॥१८९॥
कोटिवेधी रसो दिव्यः पलेनैकेन दिव्यता ।
हेमजांबूनदं दिव्यं तत्तु वेधानुवेधकम् ॥१९०॥
दृष्टीविषोरगं घोरं दर्शनान्मारयेद् ध्रुवम् ।
न तद्वज्रं तु भेत्तव्यं पूजां[ज्यं] वा फलदायकम् ॥१९१॥
गुटिकास्य विनिक्षिप्ता अदिव्या दिव्यगोपनी ।
कालकूटविषं यत्तु दर्शनान्मारयेद्ध्रुवम् ॥१९२॥
नैव तद्भेदनीयन्तु पूजनाल्लाभदायकम् ।
अमृतस्योपयोगेन अजरो ह्यमरो भवेत् ॥१९३॥
अंजनेनांजनान्नेत्रे सर्वदिव्यानि पश्यति ।
पश्येत्तमसि सर्वं च जंबूद्वीपं चराचरम् ॥१९४॥
छिद्रां धरां जले पश्येज्जगत्सर्वं वशं नयेत् ।
अंजनं गोपनं ख्यातं सर्वदुष्टवशंकरम् ॥१९५॥
रक्तं महागुणं दिव्यमनघेदं महागुणम् ।
धारणाद्वरलास्त्राणि रुजाग्निजलरक्षणम् ॥१९६॥

---

* अतः परं मूलमातृकायाः चत्वारि पत्राणि ( १४२–१४५ ) न सन्ति ।

चिंतामणिर्धृतो हस्ते उक्तो विघ्नविनाशनः ।
चिंतितानि तु द्रव्याणि आनयेन्नात्र संशयः ॥१९७॥
अग्निशौचेन वस्त्रेण छादितो विचरेन्महीम् ।
अदृश्यः सर्वभूतानां जरामृत्युविवर्जितः ॥१९८॥
माला कण्ठे मूर्ध्नि धार्या उत्पतेद्यत्र रोचते ।
दिव्यदिव्यैर्न पश्येत दिव्यास्त्रैर्नैव भिद्यते ॥१९९॥
मृत्युरोगजरायुक्तः क्रीडेद्यत्रापि रोचते ।
अथान्ये भवेयुर्वज्रा रेखालक्षणवर्जिताः ॥२००॥
लक्षयेदग्नियोगेन निपुणत्वाद्यथार्थतः ।
धाम्यमाने यदा वज्रे कृष्णज्वाला[लो] हुताशनः ॥२०१॥
धूमार्चिर्धूमबहुलो मुंचेदथ महारवम् ।
हाहातुटाशब्द हूहू हं हं धू धू महारवः ॥२०२॥
धूधूशब्दं च कुरुते स चोरगं विनिर्दिशेत् ।
अन्येऽपि वज्रा ये केचित्तेषां चूर्णं तु बाह्यगम् ॥२०३॥
घर्षणाद्यद्भवेत्किंचित्सकलं भेदितस्य वा ।
तेन नागं शतांशेन जायते कनकं वरम् ॥२०४॥
अथान्ये धाम्यमानास्तु शुद्धाभस्तु विभावसुः ।
नाना ज्वालासमाकीर्णाः सर्वगंधविवर्जिताः ॥२०५॥
शंखदुन्दुभिनिर्घोषः गोरंभध्वनिनादितैः ।
वेदगीतध्वनिर्वाथ शोभनं तु यदा भवेत् ॥२०६॥
भेदनीयं तु तद्वज्रं यथालेपेन तच्छृणु ।
अमोघं[घं] दर्शनं तस्य वज्रस्य फलदायकम् ॥२०७॥
नासिद्धः पश्यते वज्रं घोरजापी तु पश्यति ।
लब्ध्वा तु वज्रं विधिवत्क्षारतोयेन घर्षयेत् ॥२०८॥

गोकेशौ निर्म्मलं कृत्वा लक्षयित्वा यथायथम् ।
परस्पराहतं भेदं वज्रस्यैव विधीयते ॥२०९॥
अथ भेदं न यात्येकं तदा लेपं तु कारयेत् ।
लांगली वज्रकन्दश्च जालिनी च कुमारिका ॥२१०॥
शृगाली चरुष्कं चैव काष्टछत्रं च भूगतम् ।
सर्प्पयोन्मत्त बीजानि बीजाःऽमार्म[अपामार्ग]संभवाः ॥२११॥
देवदालीफलान्येवं तथाऽरिष्टफलानि च ।
व्याधिघातफलं चैव तथा पाषाणभेदकः ॥२१२॥
वज्राहताथवा माषा तथा चारत्रयं च यत् ।
राजार्ककुसुमं चैव मेषशृंगावलेपितम् ॥२१३॥
कुलत्थाश्चैव तत्काथं दत्वा पेष्य यथायथम् ।
उक्तक्षारसमायुक्तास्तेन वज्रं तु लेपयेत् ॥२१४॥
घामयेद्वन्धमायाति अपि वज्रं शतक्रतोः ।
अग्नितप्तं तु तत्कृत्वा तस्मिन्कल्के निषेचयेत् ॥२१५॥
भिद्यंते शतधा क्षिप्रं सर्वे बला[ज्रा] न संशयः ।
वज्रचूर्णकलामेकं अम्लपिष्टं च गोपयः ॥२१६॥
यवगोधूमचूर्णं वा पायसं तेन पाचयेत् ।
मध्वाज्यसहितं खादेत्त्रिसप्ताहं महामृतम् ॥२१७॥
प्रथमे हन्ति तद्व्याधिर्द्वितीये तु जरां जयेत् ।
आयुर्वृद्धिस्तृतीये तु मासात्कल्पायुषो भवेत् ॥२१८॥
सत्त्वशौर्यवलोपेतो जरामृत्युविवर्जितः ।
नवनागवलो युद्धे महाबलपराक्रमः ॥२१९॥
वरवज्रस्य कलना राज्यं च पृथिवीतले ।
तस्मात्सर्वप्रयत्नेन वज्रस्यान्वेषणे हितम् ॥२२०॥

लब्धमात्रा भवेत्सिद्धिर्निश्चयं कल्पचोदिता ।
अघोरास्त्रं महाघोरं वज्रकर्म्मणि योजयेत् ॥२२१॥

रसकर्मसु चान्येषु क्षेत्रधातुभवेषु च ।
निधीनां साधने चैव सर्वकष्टहरो भवेत् ॥२२२॥

धातूनां चैव सर्वेषां नानाकारफलाकृतिः ।
जीवानां तु समाकारा उपला धरणीतले ॥२२३॥

धान्याकारास्तथा चान्ये मृत्तिका बहुवर्णिका ।
धाम्यलेपास्तथा ताप्या लेप्या लघुतराश्च ये ॥२२४॥

गुरुत्मनार्त्तयावर्त्ता धाम्या गुरुत्तराश्च ये ।
ससाचैक जाप्यते जाढ्याः सत्वास्त्वेवं विधीयते(?) ॥२२५॥

जायन्ते तेन योगेन क्षाराः क्षारपट्टनि च ।
शुक्लरक्तसमायुक्ताः स्वजातिगुणयोगतः ॥२२६॥

उक्तबंधेन धाम्यास्तु दंतयोगेन वा बुधः ।
अंधयित्वा धमेद्विद्वान् पीतं वा जायते सितम् ॥२२७॥

वापना वाथ कर्त्तव्या क्रमाल्लोहानि योजयेत् ।
स्वयोनिपातः क्षेत्राणां लेपवापनकर्म्मणि ॥२२८॥

क्षाराम्लस्नेहयुक्तस्तु हेमतारकरो भवेत् ।
त्रिगुणेन तु नागेन धमेत्सत्वं मृ*.........॥२२९॥

× × ×

..............................तंत्राश्च औषधीः ।
रसाश्च सिद्धिदाः ख्याता भक्तिहीने न सिद्धिदाः ॥ ७४ ॥

---

* अतः परं मूलमातृकायाः अष्टादश पत्राणि ( १४६-१६४ ) न सन्ति । एवंवेवाष्टमपटलस्य समाप्तिर्नवमपटलस्य प्रारम्भोऽपि वर्तते ।

कुपात्रे तु यथा दानं दत्तं भवति निष्फलम् ।
भक्तिहीने तथा मंत्रा रसौषध्यश्च निःफलाः ॥ ७५ ॥

तस्मात्सर्वप्रयत्नेन क्रियां भक्तिं च कारयेत् ।
यस्मान्मंत्राः क्रियाहीने भक्तिहीने न सिद्धिदाः ॥ ७६ ॥

रक्षायन्त्रे रसे चैव रसायनविधौ तथा ।
योगे च औषधीकार्यविषमोहचिकित्सिते ॥ ७७ ॥

ज्वरे भूताविषाद्ये च भक्तिहीने न सिद्धिदाः ।
तस्माच्छास्त्रोक्त विधिना मन्त्रौषध्यो नियोजयेत् ॥ ७८ ॥

शर्वजं दीप्तमन्त्रादिशतेनैकेन मन्त्रयेत् ।
कुंभस्य वामहस्तं तु दत्त्वोपरि विचिंतयेत् ॥ ७९ ॥

दीप्तायामलगर्भं तु आत्मबीजं महोदयम् ।
सोमाग्निसूर्यमध्ये तु योजयेद्धारणाऽमृतम् ॥ ८० ॥

इष्टयोगेन वा मन्त्र्य रसद्रव्यं पृथक् पृथक् ।
मुद्रया मुद्रयित्वा तु पक्षच्छेदे तु कर्त्तरी ॥ ८१ ॥

संगृह्यान्धगुहां धा[ध्मा]तं योजयित्वा यथाबलम् ।
माक्षीकामलवापेन कुमारीसेवनेन च ॥ ८२ ॥

योजयेच्छंभुजे तं तु॰ यथाबद्धवद्धमात्रतः ।
पूजयित्वा विधानेन मंत्रदीप्तां तु कारयेत् ॥ ८३ ॥

दीप्तादि खेचरैर्बीजैर्दीप्तं वामृतगर्भगम् ।
अग्निषोमात्मकं गर्भं गुटिका त्वमृतोपमा ॥ ८४ ॥

कृत्वा तु कांतजे पात्रे त्वसनस्य तु वारिणा❀ ।

× × ×

---

❀ अतः परं मूलमातृकाया पत्रद्वयं ( १६८–१६९ ) नास्ति ।

........................ ....व्यामृतधारणा ।
क्षीरोदकेन धवला सोमाक्रान्तं नभस्तलम् ॥१०९॥
धरानिकरकल्लोलप्लावितं तु महीतलम् ।
आग्नेय्यां संस्मरेत्पूर्वं ज्वालादीप्तं महाध्वरम् ॥११०॥
अमृतं योजयेदन्ते सिद्धयेद्वै शर्वजो महान् ।
मंत्राश्च सिद्धिदास्ते तु आत्माथ यतितां व्रजेत् ॥१११॥
कोटिवेधी भवेत्सूतो मन्त्राश्चाज्ञाकराः शुभाः ।
जरामृत्युरुजा मुक्तः आत्मा चैव तु जायते ॥११२॥
तेनैव मन्त्रसिद्धेन उपयुक्तेन साधकः ।
सिद्धार्थयोगेनाब्देन खेचरत्वमवाप्नुयात् ॥११३॥
अणिमादिगुणैर्युक्तः पतितुल्यगुणो भवेत् ।
इदं ते सरहस्यं तु शर्वस्यैव तु साधनम् ॥११४॥
कथितं शास्त्रमध्यस्थं महाभूत्यायुःसाधनम् ।
यस्तु मार्गमिमं हित्वा कामचारेण वर्त्तते ॥११५॥
मंत्रे च शर्वजे चैव यत्नेनापि न सिध्यति ।
यस्तुमार्गमिमं हित्वा कामचारेण सूतकम् ॥११६॥
भक्षयेन्मूढचेतस्तु क्षिप्रं गक्षे[च्छे]द्यमालयम् ।
यस्तुमार्गमिमं हित्वा तीक्ष्णाद्यानुपजीवति ॥११७॥
स मूढोऽप्यापदं प्राप्य क्षिप्रं गच्छेद्यमालयम् ।
अमृतं च विषं चैव सूतकेऽप्यायसेषु च ॥११८॥
अमृतं विधियोगेन विधिहीनं विषं भवेत् ।
एवं ज्ञात्वा तु विधिवच्छास्त्रोक्तां कारयेत् क्रियाम् ॥११९॥
रसायसेष्वजीर्णं तु विधिहीनस्य जायते ।
छर्दिः शूलं भवेच्छोफ आहारस्याप्यरोचकम् ॥१२०॥

जाड्यता गात्रभंगस्तु निद्रालस्यश्रमा व्यथा ।
दाहश्च सर्वदेहे च ज्वरश्चैव प्रवर्त्तते ॥१२१॥
लक्षयित्वा च विधिवन्निषिद्धानि तु खादति ।
अथ तद्वीर्यमन्विच्छेदशा[सा]त्म्यं चैव देहतः ॥१२२॥
पुंखापराजिता बंध्या सुरदाली वृषोदरः ।
गारुडी वायसी चैव कंचुकी वाथ वापयेत् ॥१२३॥
गोमूत्रेण तु संकाथ्य पलमात्रं तु संपिबेत् ।
रसायसाजीर्णतस्तु मुच्यते स दिनत्रयात् ॥१२४॥
अथवा द्रावकौषध्यः काथयित्वा तु पाययेत् ।
रसायसाजीर्णतः स मुच्यते च दिनत्रयात् ॥१२५॥
ज्ञात्वैवं च विधानेन कर्त्तव्यं तु रसायनम् ।
हेमयुक्तो यदा सूतो धारितव्यः स्वदेहतः ॥१२६॥
तथाकान्तमणिश्चान्यो दीप्तमंत्राद्विरेक्षतः ।
दीप्तयामलगर्भे तु अमृतं योज्य मंत्रकात् ॥१२७॥
रसं रसायनं चैव गोपनं सिद्धयस्तथा ।
अग्निषोमीयगर्भे तु अमृतं वाथ योजयेत् ॥१२८॥
स्वायंभुकौलवे गर्भं अमृतं वाथ सिद्धिदम् ।
स्वच्छंदकौलवस्याथमध्यस्थममृतं जपेत् ॥१२९॥
व्योम्नश्च द्विविधस्याथ द्वाभ्यां आंतर्यं योजयेत् ।
विश्वरूपां परां विद्यां गुटिकायां नियोजयेत् ॥१३०॥
गोपनं मनसा चैव वज्रदेहत्वमाप्नुयात् ।
रुजाजराविनिर्मुक्तो विचरेत्तु महाबलः ॥१३१॥
शिवसूत्रमिदं सर्वं देवानामपि दुर्लभम् ।
भूत्यायुषं महासिद्धिं ज्ञानं मुक्तिमवाप्नुयात् ॥१३२॥
पंचखंडमिदंशास्त्रं नामसंज्ञा पृथक् पृथक् ।
गुरूपदेशाज्ज्ञानीयात्सत्यं सत्यं न संशयः ॥१३३॥

पंचविंशतिबद्धानां क्रियासिद्धिं करोति यः ।
सरसो योगवाहोऽपि नंदिना परिकीर्त्तितः ॥१३४॥
सिंहभूपहितार्थाय नाथोऽयं[नाथेन] प्रकटीकृतः ।
हीनाः स्युर्द्धातुमूलाद्याः क्रियाबीजविवर्जिताः ॥१३५॥
मंत्राणां कौचिकानां च न्यूनाधिक्यं च पावकम् ।
नाथगोरक्षसंप्रोक्तः सरसं कालकूटवत् ॥१३६॥
पूर्वं विज्ञायते सम्यक् साक्षादमृतवद्भवेत् ।
आयुः पुष्टिर्बलं तेजो जरां जयति नान्यथा ॥१३७॥
गुरुगम्यमिदं शास्त्रं न चान्यत्पृथिवीतले ।
नृपाणां च हितार्थाय क्रियासंघट्टकीर्त्तितः ॥१३८॥
क्वचिच्छास्त्रे क्रिया नास्ति क्रमसंख्या न च क्वचित् ।
मात्रायुक्तिः क्वचित् नास्ति संप्रदायः क्वचिन्न च ॥१३९॥
तेन सिद्धिर्न तत्रास्ति रसे चापि रसायने ।
न क्रमेण विना शास्त्रं न शास्त्रेण विना क्रमः ॥१४०॥
शास्त्रं क्रमयुतं ज्ञात्वा यः करोति स सिद्धिभाक् ।

इत्याद्ये स्वच्छन्दशक्त्यावतारे शतसाहस्र्यां गोरक्षसंहितायां
भूतिप्रकरणे शिवसूत्रं रसायनविधिर्नाम
नवमः पटलः समाप्तः ॥

[ संवत् १८९३ का कार्त्तिक मासे सुवे शुक्लपक्षे ११ सनिवासरे लिखितं रामकृष्णपुरी निपालमध्ये त्रिपुरेश्वर का बगीचा मध्ये ॥ शुभंभवतु ॥

यादृसं पुस्तकं दृष्ट्वा तादृसं लिखितं मया ।
यदि शुद्ध अशुद्धं वा ममदोषो न दीयते ॥
जलेरक्षं थलेरक्षं रक्षं शिथिल बंधने ।
मूर्खहस्ते न दातव्यं एवं वदति पुस्तकम् ॥ ]

॥ समाप्तमिदं गोरक्षसंहितायाः भूतिप्रकरणम् ॥

श्रीः

## परिशिष्टम् (क)

# भूतिप्रकरणस्थवनस्पतीनामनुक्रमणी

## परिशिष्टम् (ख)

# भूतिकरणस्थखनिजद्रव्यानुक्रमणी

## परिशिष्टम् (ग)

# भूतिप्रकरणस्थेतरद्रव्यानुक्रमणी

---

## परिशिष्टम् (घ)

# भूतिप्रकरणे समागतग्रन्थानां मन्त्राणाञ्चानुक्रमणी





## परिशिष्टम् (ङ)

# भूतिप्रकरणस्थ-रसक्रियोपयोगिनामुपकरणानामनुक्रमणी

# सुसङ्ग्राह्याः केचन वेद-वेदाङ्गग्रन्थाः

| क्रमसङ्ख्या-ग्रन्थनाम | मूल्यम् |
|---|---|
| १. **शुक्लयजुर्वेदकाण्वसंहिता**—संहितेयं खलु सायणभाष्यसमलङ्कृता साम्प्रतं मुद्रितप्रायैव। ग्रन्थरत्नमिदं विविधैः पद-पाठ-टीकागतसन्दर्भसन्निवेश-विशिष्टैः टिप्पण्यादिभिः, अथ च विदुषा श्रीचिन्तामणिमिश्रमहोदयेन विरचितया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समेधितमस्ति— | २२·०० |
| २. **अथर्ववेदे शान्तिपुष्टिकर्माणि**—श्रीमत्या डा० मायामालवीयया वैदिकवाङ्मयस्यानुशीलनं कृत्वा विरचितो विविधाभिरानुसन्धानिकफलश्रुतिभिः प्रतिष्ठापितश्चायं गवेषणाप्रबन्ध :— | ८·०० |
| ३. **बौधायनशुल्बसूत्रम्**—[बोधायनाचार्यप्रणीतम्]। मुद्रितप्रायोऽयं ग्रन्थः श्रीव्यङ्कटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया व्याख्यया, अथ च श्रीद्वारकानाथयज्वप्रणीतया बौधायनशुल्बसूत्रव्याख्यानाख्यया टीकया प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः :— | |
| ४. **बृहत्संहिता**—[ भागद्वयात्मिका ] श्रीवराहमिहिराचार्यप्रणीता। ग्रन्थोऽयं श्रीभट्टोत्पलविवृतिविभूषितः, अथ च विमर्शात्मकेनोपोद्घातेन समुल्लसितः। | प्रथमभागस्य मूल्यम्—१८·००<br>द्वितीयभागस्य मूल्यम्—२०·०० |
| ५. **स्कन्दशारीरकम्**—सामुद्रिकशास्त्रमधिकृत्य केनाप्यज्ञातनाम्ना विदुषा प्रणीतोऽयं ग्रन्थोऽज्ञातनाम्न्या टीकया पुरस्कृतोऽस्ति, अस्मिन् हि खलु ग्रन्थे शरीरस्थरेखापरीक्षणद्वारा सुकृतदुष्कृतयोरिष्टानिष्टप्राप्तिसाधनयोर्भृशं विवेचनम् उपलभ्यते। पुस्तकमिदं गवेषणाप्रधानैः भूमिका-टिप्पणादिविविधैः परिशिष्टैनूनं स्वीयं महत्त्वं भजते— | १५·०० |
| ६. **अर्वाचीनं ज्योतिर्विज्ञानम्**—ग्रन्थोऽयं विदुषा श्रीरमानाथसहायमहोदयेन विनिर्मितः खल्वाधुनिकगवेषणापद्धत्या प्राच्यभारतीयगणितशास्त्राधुनिकभौतिकशास्त्रयोरत्र तुलाबोधकं परीक्षणं कृतम्— | १३·०० |
| ७. **परिभाषेन्दुशेखरः**—[ हैमवतीसंवलितः ] वैयाकरणमूर्धन्यपण्डितश्रीयागेश्वरशास्त्रिकृतया 'हैमवती'-व्याख्यया समुद्भासितः। ग्रन्थरत्नमिदं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयनव्यव्याकरणविभागे 'उपाचार्य'-(रीडर) पदमलङ्कुर्वद्भिः श्रीकालिकाप्रसादशुक्लमहोदयैः विविधपाठभेद-टिप्पणी-परिभाषापाठानुक्रमणी-वर्णानुक्रमसूची-परिभाषाव्याख्यातृकृतपरिभाषापाठभेदप्रभृतिभिरुपादेयगवेषणामूलकभूमिकादिभिरुपस्कृतः— | ४६·०० |

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२**
मुद्रकः—मुद्रणालय-व्यवस्थापकः, **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः**, वाराणसी-२२१००२